श्रीहेमचन्द्राचार्यजैनग्रन्थमाला. ५३

पंडितशुभशीलगणिविरचित—

# श्रीविक्रमचरित्रम्।

## [द्वितीयः खंडः]

श्रीमदाचार्यविजयनीतिसूरीणामुपदेशेन- नेरावळवास्तव्यस्य श्रीमतः श्रेष्ठिवर्यस्य 'शाह अमिलाल रायचंद रतनजी'
इत्येतस्य द्रव्यसाहाय्येन प्रकाशितम्,
वळावास्तव्येन सुश्रावकहर्षचन्द्रात्मजेन पंडितभगवानदासेन संशोधितं च।

संवत् १९८१. प्रतयः ५००.

# निवेदन.

आ विक्रमचरित्र लगभग त्रण वर्ष पूर्वे प्रारंभेलुं, परन्तु प्रेस वगेरेनी मुश्केलीओने लीधे आजे लांबा काळे प्रकट थाय छे. आ चरित्रनो सर्ग १–७ सुधीनो प्रथम खंड जैन एडवोकेट प्रेसमां छापेलो छे, पण जल्दी पूरुं करवाना इरादाथी सर्ग ८-१२ सुधीनो बीजो भाग लींबडी–श्री जशवंतसिंह प्रीन्टींग प्रेसमां छापवा आप्यो हतो, अने ते प्रेसना अधिपतिए जल्दीथी छापी पूरो करी आप्यो छे; छतां केटलीक सांसारीक अडचणोने लीधे तेने प्रकट करवामां बे त्रण मास जेटलो अधिक विलंब थयो छे. आ चरित्र उपर एक विस्तृत प्रस्तावना लखवानी इच्छा हती, पण उपरना कारणथी तेम करवुं बनी शक्युं नथी. आ ग्रन्थना मुद्रणमां श्री डेलाना ज्ञान भंडारमांथी शरुआतथी बे प्रतो मळी हती. एक जूनी प्रत हती, परन्तु ते जेवी जोइए तेवी शुद्ध नहोती, तेनी अमे 'क' संज्ञा राखी छे, बीजी प्रत तद्दन नवी लखावेल हती, अने उपरनी प्रत करतां तेमां बहु विशेषता नहोती, तेनी 'ख' संज्ञा छे. ते बन्ने प्रतोने आधारे प्रथमभाग अने बीजा भागनी शरुआतनो थोडो भाग छपाया पछी बाकीनो भाग वधारे अशुद्ध जणाता त्रीजी प्रत मेळववानी वधारे आवश्य-

॥ ४ ॥

करा जणाइ. तपास करता श्री डेहलाना ज्ञानभंडारमाथी त्रीजी प्रत पण मळी, ते माय शुद्ध हती, तेनी अमे 'ग' संज्ञा राखी छे. ते त्रणे प्रतोना आधारे बाकीना भागनुं मुद्रण अने संशोधन करेलुं छे, तो पण केटलेक स्थळे संदिग्ध पाठ रह्यो छे. दृष्टिदोषथी तेमज अक्षरयोजकना प्रमादथी केटलेक स्थळे अशुद्धि रहेल छे; तेम प्रेसमां छपाता काना अने मात्राओ त्रुटित थवाथी पण केटलेक स्थळे अशुद्ध पाठ थयो छे. तो वाचको अमारी सर्व त्रुटिओ दरगुजर करशे. आ ग्रन्थनुं शुद्धिपत्रक पण हवणां अवकाशना अभावे विलंब थवाना भयथी पछीथी आपवा धार्युं छे.

आ चरित्र श्रीमद् आचार्य श्रीविजयनीतिसूरिना उपदेशथी वेरावळनिवासी श्रीयुत शेठ अमीलाल रायचंदनी द्रव्यसहायथी तेमना स्वर्गस्थ पिता श्रीमान् शेठ रायचंद रतनजीना स्मरणार्थे प्रकाशित करवामां आवेल छे. तेमज श्रीमान् रायचंदभाइनो फोटो पण आ ग्रंथ साथे आपवामां आवेल छे. एज.

श्रीहेमचन्द्राचार्यग्रन्थमाला.<br>सं. १९८१ फाल्गुन<br>वद ५.

प्रकाशक.

॥ ५ ॥

[ द्वितीयः खण्डः ]

# अनुक्रमणिका

## अष्टमः सर्गः ।



॥ ६ ॥

नवमः सर्गः ।



दशमः सर्गः ।

एकादशः सर्गः।



॥ ८ ॥

द्वादशः सर्गः ।





सुधारो–त्रुटित पाठ+पृ. ४१ पं. ८.

"कर्ताऽऽश्रमस्य कः सारां ततः स निर्जरो जगौ ॥

दौहित्रियेत्र पानीय मध्यतः शुकहंसयोः । विमुञ्चात्र ततः स्थानं भविष्यति निरत्ययम् ॥ इति गपुस्तके ।

## आ ग्रन्थमाळामां प्रकाशित थयेला ग्रन्थो.

१. मणिपतिराजर्षिचरित्र—आ चरित्रना कर्ता श्रीमान् जंबू कवि छे. तेनी रचना सरल प्रासादिक अने आलंकारिक छे, चरित्र वैराग्यप्रधान छे, तेमां नानी, रसिक अने सुन्दर वैराग्योत्पादक कथाओ छे. साधु साध्वीने व्याख्यानमां वांचवा योग्य आ चरित्र छे. मूल्य ०–८–०.

२. कर्मग्रंथ, कर्मप्रकृति, पंचसंग्रह मूल—आ ग्रंथमां आ त्रण प्रकरणो मूळ आपेला छे.

३. विक्रमचरित्र खंड १–२—आ चरित्रना कर्ता श्रीमान् मुनिसुन्दरसूरिना शिष्य पं. शुभशीलगणी छे. रचना अत्यन्त सरल छे. तेमां विक्रमराजानुं चरित्र सविस्तर आपेलुं छे, अवान्तर कथाओ पण रस उत्पन्न करे तेवी छे. ग्रन्थसंख्या लगभग सात हजार श्लोक प्रमाण छे. साधारण बोधवाळा साधुओ माटे व्याख्यानमां वांचवाने उपयोगी छे. मूल्य बन्ने भागना १–८–०.

॥ १० ॥

# छपाता ग्रन्थो.



कर्मग्रन्थ विवेचन सहित भा १ लो.—आ प्रथम भागमां कर्मविपाक, कर्मस्तव, बन्धस्वामित्व अने षडशीति-ए चार कर्मग्रन्थ विवेचनसहित आपवामा आवशे. कर्मसम्बन्धी कठिन विषयोनुं सरल तेम स्पष्ट भाषामां सविस्तर विवेचन करवामां आवशे.

नाभिनन्दनोद्धारप्रबन्ध—आ ग्रन्थना कर्ता कक्कसूरि छे, शत्रुंजय तीर्थनो उद्धार करनार समरश्रेष्ठी अने प्रतिष्ठा करनार पोताना गुरुनुं चरित्र आपेलुं छे. कथा ऐतिहासिक छे.

॥ ११ ॥



तीर्थानामुत्तमं तीर्थं नगानामुत्तमो नगः । क्षेत्राणामुत्तमं क्षेत्रं सिद्धाद्रिः श्रीजिनैर्मतः ” ॥ ११ ॥ इत्यादि ॥
पुराणे—“अष्टषष्टिषु तीर्थेषु यात्रया यत्फलं भवेत् । आदिनाथस्य देवस्य स्मरणेनापि तद् भवेत् ॥ १२॥
स्मृत्वा शत्रुंजयं तीर्थं नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे पुनर्जन्म न विद्यते ” ॥ १३ ॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहाद् । दुष्कर्म क्षीयते मार्गे सागरोपमसंचितम् ॥ १४ ॥
यस्मिन् शत्रुंजये तीर्थे सिद्धिसौख्यप्रदे सदा । पुण्डरीकादयोऽनेके सिद्धा गणभृतः पुरा ॥ १५ ॥ यतः--
“चित्तस्स पुण्णिमाए समणाणं पंचकोडिपरिआरिओ। निम्मलजस्स पुंडरीअं जयउ तं पुंडरीअतित्थं ॥१६॥
जत्थाइजजसाई रामरंता रिसहवंसजनरिंदा । सिद्धिं गया असंखा जयउ तं पुडरीअतित्थं ॥ १७ ॥
जहिं रामाइतिकोडी इगनवई नारयाइमुणिलक्खा । जाया उ सिद्धिराया जयउ तं पुडरीअतित्थं ॥ १८ ॥
येनादौ निखिला लोकव्यवहाराः प्रकाशिताः । स श्रिये ऋषभो भूयाद् भव्याङ्गिभ्यो जिनेश्वरः ॥ १९ ॥
यं शैलराजं समवाप्य सूरिशः श्रीपुण्डरीकादिकसाधुसत्तमाः मुक्तिश्रियं प्रापुरनर्घ्यशर्मणे स स्तात् जिनानां विमलावनीधरः॥
पुण्डरीकगिरेः शत्रुंजयेत्याह्वा यतोऽभवत् । तस्य श्रीशुकराजस्य चरितं कीर्तयिष्यते ॥ २१ ॥ तथाहि—
इहैव भरतक्षेत्रे पुरे क्षितिप्रतिष्ठिते । मृगध्वजाभिधो भूपो बभूव न्यायतत्परः ॥ २२ ॥ यतः—
“यस्तेजस्वी यशस्वी शरणगतजनत्राणकर्मप्रवीणः, शास्ता शश्वत् खलानां क्षतरिपुनिवहः पालकश्च प्रजानाम् ।
दाता भोक्ता विवेकी नयपथपथिकः सुमतिज्ञः कृतज्ञः, प्राज्यं राजा स राज्यं प्रथयति पृथिवी--मण्डलेऽखण्डिताज्ञः”॥

उद्यानपालकादिष्टे वसन्तसमये वने । सान्तःपुरो ययौ क्रीडा कर्तुकामो महीपतिः ॥ २४ ॥
दीर्घिकासु चिर क्रीडा कृत्वा पत्नीयुतो नृपः । भ्रमन् वने लसच्छाय–माम्र प्रेक्ष्येत्थमूचिवान् ॥ २५ ॥
"मोहग ऊपरि मजरी तूं सोहइ सहकार । अन्नि जि तरुअर तुडि करइ ते सव्वे गम्मार" ॥ २६ ॥
ततस्तरोस्तले राजा निविष्टः सपरिच्छदः । अन्तःपुरं निज प्रेक्ष्य गर्वमित्थं दधौ हृदि ॥ २७ ॥
'स्त्रियो कस्यापि स्त्रियन्ते नहीदृश्यो मृगीदृशः । प्राप्यन्ते न यतः कल्प–लताः सर्वत्र भूतले' ॥ २८ ॥
तदा तस्याम्रवृक्षस्य शाखाया संस्थितः शुकः । भूपगर्वच्छिदे श्लोक–मेकमित्थं जगौ वरम् ॥ २९ ॥
' स्वचित्तकल्पितो गर्वः कस्य नाम न विद्यते । उत्क्षिप्य टिट्टिभः पादौ शेते भङ्गभयाद् भुवः ' ॥ ३० ॥
शुकोक्त भूपतिः श्रुत्वा यावदेव व्यचिन्तयत् । अनेनाहं कथं गर्वं कुर्वाण-स्तर्जितोऽधुना ॥ ३१ ॥
किमेव काकतालीया–जाकृपाणीयनीतितः । स्वभावेन शुकेनेदं प्रोक्तं किंवा विजानता ॥ ३२ ॥
एवं च भूरिशस्तस्मिन् विकल्पान् हृदि कुर्वति । भेक–हंसोक्तिसान्मिश्रं काव्यं कीरः पुनर्जगौ ॥ ३३ ॥
"रे पक्षिन्नागतस्त्वं कुत इह सरसस्तत् कियद् भो विशालं किं मद्धाम्नोऽपि वाढं नहि नहि सुमहत् पाप मा जल्प मिथ्या।
इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं, नीचः स्वल्पेन गर्वी भवति हि विषया नापरो येन दृष्टाः" ॥ ३४ ॥
श्रुत्वा तत्काव्यमुर्वीशो दध्यावेवं निजे हृदि । कूपमण्डूकतुल्यं मां करोत्येष कथं शुकः ॥ ३५ ॥
कूपभेकेन राजँस्त्वं तुल्योऽसीति जगौ शुकः । ततो ध्यातिति क्ष्मापः शुकोऽस्ति ज्ञानवानयम् ॥ ३६ ॥

॥ ३ ॥

ततः प्राह शुको राजन् ! त्वं ग्रामीणो भवन्नसि । चलदन्त-विषाणोरु-दत्तरागनिदर्शनात् ॥ ३७ ॥

" दन्ताः सप्त चलं विषाणयुगलं पुच्छाञ्चलः कर्बुरः, कुक्षिश्चन्द्रकितो वपुः कुसुमितं सत्त्वच्युतं चेष्टितम् ।
अस्मिन् दुष्टरूपे नृपाग्रिमगुणग्रामानभिज्ञात्मनो, ग्रामीणस्य तथाऽपि चेतसि चिरं धुर्येति विस्फूर्जितम् "॥३८॥

एवमुक्तोऽपि नो यावद् गर्वं मुञ्चति भूपतिः । तावत् प्राह पुनः कीर इति गीर्वाणभाषया ॥ ३९ ॥

'समान्तःपुरनारीभ्यः श्रीगाङ्गलिनृपेः सुता । चारुरूपाऽस्ति कमल—माला नाम्नी महीपते ! ॥ ४० ॥

यद्यस्ति नृपते ! वाञ्छा तस्या रूपनिरूपणे । तदेहि मम पृष्ठौ त्व'-मित्युक्त्वोड्डीनवान् शुकः ॥ ४१ ॥

नृप उत्कलचेतस्कः प्राहेति सेवकान् प्रति । आनयध्वं द्रुतं भृत्या ! वायुवेगतुरंगमम् ॥ ४२ ॥

सेवकस्तत्क्षणादश्वशालातो विनयाञ्चितः । आनिनाय नृपोपान्ते वायुवेगतुरंगमम् ॥ ४३ ॥ यतः—

"सतां पत्युः प्रभोः पत्तिः गुरोः शिष्यः पितुः सुतः । आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् " ॥४४॥

भृत्यानीतं हयं वायु—वेगं पर्याणसुन्दरम् । आरुह्य नृपतिः कीरपृष्ठौ च चलितो द्रुतम् ॥ ४५ ॥ यतः—

"अश्वे खरखुरोत्खातरजः सल्लक्षणस्थितिः । गतिर्वेगवती वक्रमास्यं धाराप्रपञ्चनम् ॥४६॥—अश्ववर्णनम् ।

सर्वः परिकरो राज्ञः पृष्ठौ गत्वा कियद्भुवम् । अनीक्ष्य च विषण्णः सन् पुरमध्यमुपागमत् ॥४७॥ यतः—

"राज्यं निःसचिवं गतप्रहरणं सैन्यं विनेत्रं मुखं, वर्षा निर्जलदा धनी च कृपणो भोज्यं तथाऽऽज्यं विना ।
दुःशीला गृहिणी सुहृन्निकृतिमान् राजा प्रतापोज्झितः, शिष्यो भक्तिविवर्जितो नहि विना धर्मं नरः शस्यते' ॥४८॥

कीरपृष्ठो व्रजन्नेवं योजनानि शतं नृपः । अतिक्रम्य महाटव्यां प्राप्तो घोटकवेगतः ॥ ४९ ॥
प्रासादमेकं निलसत्सुवर्ण–दण्डाढ्यकुम्भं प्रचलत्पताकम्। ददर्श यावन्नृपतिस्तदीय–शृङ्गे निवेश्येति शुको जजल्प॥
'राजन् युगादीशजिनं प्रणम्य विधेहि सौम्यजननं पवित्रम्'। राजा जिनेन्द्र तुरगस्थितः सन् ननाम कीरस्य गतेर्भयेन॥
ततः कीरः समुड्डीय गत्वा प्रासादमध्यतः । भक्त्या नत्वा जिनं स्तोतुं प्रवृत्त इति मोदतः ॥ ५२ ॥ यतः–
मूर्तिस्त्रिजगतां महार्तिशमनी मूर्तिर्जनानन्दिनी, मूर्तिर्वाञ्छितदानकल्पलतिका मूर्तिः सुधास्यन्दिनी ।
संसाराम्बुनिधिं न तर्तुमनसां मूर्तिर्दृढा नौरिव, मूर्तिर्नेत्रपथं गता जिनपते ! किं किं न कर्तुं क्षमा ? ॥-इत्यादि स्तुतिरत्र ।
शुकस्तवध्वनिं श्रुत्वा हयादुत्तीर्य भूपतिः । प्रासादमध्यमागत्य स्तौति स्मेति जिनं मुदा ॥ ५४ ॥
'श्रेयःसंकेतशाला सुगुणपरिमलैर्जेयमन्दारमाला, छिन्नव्यामोहजाला प्रमदभरसरःपूरणे मेघमाला ।
नम्रश्रीमन्मराला वितरणकलया निर्जितस्वर्गिशाखी, त्वन्मूर्तिः श्रीविशाला विदलतु दुरितं नन्दितक्षोणिपाला' ॥५५॥
इतः प्रासादसनीडाश्रमस्थो गागलिर्मुनिः । श्रुत्वा तां स्तुतिमाश्चर्यं कुर्वंस्तत्राययौ द्रुतम् ॥ ५६ ॥
भूपतेः स्तुतिपर्यन्ते गागलिर्मुनिपुङ्गवः । प्रचक्रमे स्तुतिं कर्तुं जिनस्य मधुरध्वनिः ॥ ५७ ॥
'श्रीनाभिभूपालकुलावतंस ! नमत्सुपर्वाधिपराजहंस ! । कल्याणवल्लीततिवारिवाह ! महातमोवृक्षनदीप्रवाह ॥
इति स्तुत्वा जिनं भक्त्या मुनिः पप्रच्छ भूपतिम् । राजन् मृगध्वजेदानी–मलंकुरु ममाश्रमम् ॥ ५९ ॥
निजनामश्रुतेर्जात–चमत्कारो नरेश्वरः । तस्याश्रमे ययौ तावद् यावत् सन्मानितो भृशम् ॥ ६० ॥

॥ ५ ॥

मोवाच गागली राजन् कृतार्थाः स्मोऽधुना वयम् । यतो भवादृशां भाग्याद् दर्शनं जायते नृणाम् ॥ ६१ ॥
ततो मुनिर्निजां पुत्रीं जिनेन्द्रार्चनतत्पराम् । वाटीतस्तत्र कमल-मालामानीतवान् स्वयम् ॥ ६२ ॥
ऋषिः माहाथ भूजाने ! मसद्य मम सुतां मम ! अङ्गीकुरु न कर्तव्यो विचारोऽत्र त्वया ध्रुवम् ॥ ६३ ॥
अत्याग्रहाद् ऋषिः पुत्रीं [1]स्वर्गिनारीसहोदराम् । मृगध्वजमहीशाय ददौ सन्महपूर्वकम् ॥ ६४ ॥
ततो मन्त्रं सुतोत्पत्तिहेतुं सद्विधिबन्धुरम् । तनयायै ददातिस्म गागलिः तापसाग्रणीः ॥ ६५ ॥ यतः–
“धर्मप्रभावतोऽटव्या–दिस्थानेषु तनूमताम् । गतानां राज्यकन्यादि–लक्ष्मीप्राप्तिर्भवेद् द्रुतम्” ॥ ६६ ॥
नृपोऽन्येद्युर्जगौ राज्यं शून्यं मे विद्यतेऽधुना । तेन[2] कुरु तथा सद्य–श्चलिष्यामि यथा मुने ! ॥ ६७ ॥
ऋषिः[3] प्राह दुकूलादि नास्ति किंचिद् ममाधुना । वल्कलान्येव वस्त्राणि सन्ति मे नापरं मनाक् ॥ ६८ ॥
तावत् तस्याः सुभाग्येना–सन्नपादपकोटरात् । सर्वभूषा-दुकूलादि–संचयो निःसृतोऽद्भुतः ॥ ६९ ॥
पुण्यैः संभाव्यते पुंसामसंभाव्यमिति क्षितौ । तेरुर्मेरुसमाः शैलाः किं न रामस्य वारिधौ ॥ ७० ॥
तदाऽऽभरण-वस्त्रादि-शालिनी ऋषिनन्दिनी । सा श्रीजिनालये प्राप मुत्कलापयितुं जिनम् ॥ ७१ ॥

१. बहुगानपुरस्सरम् । ददौ राज्ञेऽङ्गजोत्पत्ति–मन्त्रयुक्तां मनोरमाम् ॥–इति पाठः गपुस्तके ।
२. तेनातोऽहं चलिष्यामि गमिष्यामि निजे पुरे ॥–क
३. गागलिः प्रोक्तवान् दातुं दिव्यवासो न मेऽस्ति ते ।–इति कपुस्तके ।

"पुण्यप्रभावि इं शशी सूर्य चालइं, पुण्यप्रभावि इं फल वृक्ष आलइं ।
पुण्यप्रभावि इं जल मेघ मुंकइं, समुद्र मर्याद थिको (थिको) न चूकइ ॥ ७२ ॥

सामी सुणीइ अतुलाल बल जाणीसि इहेव । हीअडाभ्यंतरि मइं गहीउ जइस कि नीकली देव ॥ ७३ ॥
सामी तुम्ह पय कमलयुग निरुवमसुहदातार । गिरि पुरि वनि रणि मज्झ हीयइ आनिश वसउ अनिवार" ॥ ७४ ॥
इत्यादि भूरिशो भव्यभक्तिभङ्गीभरा स्तुतीः । कृत्वा श्रीगागलेः पुत्री स्वाश्रयं समुपागमत् ॥ ७५ ॥
मृगध्वजो जिनं नत्वा हयारूढः प्रियान्वितः । पप्रच्छ स्वपुरं गन्तुं मार्गं गागलिसन्निधौ ॥ ७६ ॥
नृपिः प्राह न जानेऽहं त्वत्पुरीमार्गमंशतः । एवमुक्ते नृपोऽवादीत् कथं मद्यमदाः सुताम् ॥ ७७ ॥
मुनिर्जगौ यावदहं स्वपुत्रीं दृष्ट्वा विवाहोत्कमना अभूवम् । तावच्छुकोऽवक् सहकारसंस्थ-श्चिन्ता मनाग् मा कुरु चित्तमध्ये॥
मृगध्वज नाम नृप प्रभाते समानयेऽहं तुरगाधिरूढं । तस्मै प्रदेया स्वसुता त्वयेति प्रोक्त्वा क्वचित्कीर इयाय शीघ्रम् ॥
त्वामागत मगे प्रेक्ष्य तुभ्यं पुत्रीमदामहम् । तेनागमगमाध्वादि न जाने मेदिनीपते ! ॥ ८० ॥
ततो यावन्नृपश्चिन्ता कुर्वाणो व्याकुलोऽजनि । तावत् शुकः समेत्येक. प्राह गीर्वाणभाषया ॥ ८१ ॥
आगच्छागच्छ भो भूप मत्पृष्ठे त्वं च वेगतः । यतोऽहं स्वाश्रितं नैव समुपेक्षे कदाचन ॥ ८२ ॥ यतः—
"सुन्दराः सुभगाः सौम्या कुलीनाः शीलशालिनः । भवन्ति धर्मतो दक्षाः शशाङ्कयशस. स्थिरा." ॥ ८३ ॥
धर्मतो वश्यमायान्ति देवा अपि हि देहिनाम् । विघ्नावली व्रजत्याशु क्षय ध्वान्तं रवेरिव ॥ ८४ ॥

॥ ७ ॥

ततश्चमत्कृतो भूपो विसृज्य मुनिपुङ्गवम् । सभार्यस्तुरगारूढः शुकपृष्ठेऽचलत्तदा ॥ ८५ ॥
गच्छतो नृपतेर्याव-दभूद् दृग्गोचरे पुरम् । तावदेकतरोः शाखा-मालम्ब्य तस्थिवान् शुकः ॥ ८६ ॥
भूपः प्राह कथं कीराग्रतो व्रजसि नाधुना । शुकोऽवक् कारणं किञ्चिदस्ति तच्छृणु साम्प्रतम् ॥ ८७ ॥
विज्ञाय त्वां गतं चन्द्र-वती तव प्रिया क्वचित् । त्वद्राज्यग्रहणाय स्वं भ्रातरं चानिनाय सा ॥ ८८ ॥
त्वत्पुरीं परिवेष्ट्यास्थाद् बलेन चन्द्रशेखरः । गव्यरस्थास्ते मया शुद्धं चकुस्तेन साहान्वहम् ॥ ८९ ॥
दुःखेन गमनं कीराद् मत्वा दध्यौ महीपतिः । अहो! असारः संसार ईदृशाऽस्ति प्रिया यतः ॥ ९० ॥ यतः—
"वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः, सर्वः कार्यवशाज्जनोऽत्र रमते नो कस्य को वल्लभः ॥९१॥
अथवा विद्यते तस्या नैव दोषो मनागपि । यतः शून्यं पुरं दृष्ट्वा वाञ्छत्यन्यो जनोऽपि च ॥ ९२ ॥
मया येन पुरी मुक्ता रभसा मुग्धबुद्धिना । तेनायं विहितो दोषो मम नान्यस्य कस्यचित् ॥९३॥ यतः—
"सगुणमपगुणं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥९४॥
सहसा विदधीत न क्रिया-मविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥
एवं चिन्तापरे भूपे यावत्कीरोऽगमत् क्वचित् । तावद् दूरे बलं दृष्ट्वा गच्छन् भूपोऽभवत्सभीः ॥९६॥

नूनमेकाकिनं मत्वा मामत्र विपिने स्थितम् । शत्रुसैन्यमगाद् हन्तुं रक्षाम्येतां प्रियां कथम् ॥९७॥
यावदेवमभूद् भूपो विकल्पव्याकुलाशयः । तावज्जयजयेत्यादि–ध्वनिस्तस्य पुरोऽभवत् ॥९८॥
दृष्ट्वा निजं परीवार दधानश्चित्रमात्मनि । भूपः प्रोवाच भो यूयं कथमत्राधुनाऽऽगता ॥९९॥
तेऽपि प्राहुर्न जानीमः केनानीता नरेण नः । अत्रागतं स्वयं दृष्टं विद्युत्पात इवाचिरात् ॥१००॥
आगच्छन्त नृप तूर्य–स्वानपूरितादिग्मुखं । आगत्य मन्त्रिणश्चन्द्र–शेखराय व्यजिज्ञपन् ॥१०१॥
राजन्नय नृपो हन्ता भविष्यत्यात्मन. किल । तेनैव क्रियते युद्धी रक्षणाय निजात्मनः ॥१०२॥ यतः–
"बलवन्त रिपु दृष्ट्वा किलात्मानं प्रगोपयेत् । बलवद्भिस्तु कर्तव्या शरच्चन्द्रप्रकाशता ॥१०३॥
उत्तम प्रणिपातेन शूर भेदेन योजयेत् । नीचमल्पप्रदानेन समशक्ति पराक्रमैः" ॥१०४॥
गोपयित्वा निजाकार तत्कालोत्पन्नबुद्धिकः । चन्द्रो मृगध्वजक्ष्माप–पार्श्वे गत्वेदमूचिवान् ॥१०५॥
दूरदेशे गत स्वामि–स्त्वां मत्वाऽह जनश्रुतेः । शून्य त्वन्नगर पातुकामो–ऽगां भक्तिभावितः ॥१०६॥
तत् त्वद्भटैरजानद्भि–रारब्धा युद्ध मया सह । प्रहारा भूरिशस्तेषां सोढारो मे भटैर्ध्रुवम् ॥१०७॥ यतः–
"षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णस्तु धार्यते । द्विकर्णस्यापि मन्त्रस्य ब्रह्माप्यन्तं न गच्छति" ॥१०८॥
श्रुत्वैतद् भूपतिस्तस्य बहुमानं ददद् भृशम् । सदुत्सवं पुरीमध्ये यावदायाति वर्त्मनि ॥१०९॥
तावन्निजं निज कार्य मुक्त्वा शीघ्रं मृगीदृशः । भूपं पत्नीयुत द्रष्टु–कामास्तत्र समाययुः ॥११०॥

॥ ९ ॥

"तीहं तिन्नि पिआरडां दूध जमाइ तूर । अवर कि तिन्नि पिआरडां कलि कज्जल सिन्दूर" ॥१११॥
विधाय कमलां पत्नीं पट्टराज्ञीपदे नृपः । न्यायमार्गेण सकलाः प्रजाः शास्ति सदाशयः ॥११२॥
पुत्रार्थं जपितोऽन्येद्यु–र्मन्त्रो यावन्महीभुजा । तावता सर्व पत्नीना–मेकैकस्तनयोऽजनि ॥११३॥
अन्येद्युरिति विज्ञप्तो भूपः कमलमालया। स्वामिन् ! स्वप्नोऽनघो लब्धो मयाऽद्य सुखसुप्तया ॥११४॥
मत्तातस्याश्रमोपान्ते स्थितः सर्वज्ञसद्मनि । नतः श्रीऋषभो देवः कल्याणीभक्तितो मया ॥११५॥
जिनेनोचेऽधुना वत्से ! गृहाणैकं शुकं वरम् । कियत्यपि गते काले हंसं दास्ये पुनस्तव ॥ ११६ ॥
लब्ध्वा स्वप्नमिमं रात्रौ प्रबुद्धाऽहं ततः प्रभो ! । एतत्स्वप्नेन यद् भावि फलं तद् ब्रूहि साम्प्रतम् ॥ ११७ ॥
प्रातः स्वप्नविदः पृष्ट्वा यथाविधि महीपतिः । प्रोवाचेति प्रियापार्श्वे इति स्वप्नफलं स्फुटम् ॥११८॥ यतः–
यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम् । सुवर्णं वृषभं गावं कुटुम्बं तस्य वृद्धयति ॥ ११९ ॥
दीपमन्नं फलं पद्मं कन्यां छत्रं तथा ध्वजम् । स्वप्नान्ते यो लभेन्मन्त्रं स सदा लभते सुखम् ॥ १२० ॥
कृष्णं कृत्स्नमशस्तं मुक्त्वा गो-वाजिराज-गज-देवान् । सकलं शुक्लं शस्तं मुक्त्वा कार्पास-लवणानि ॥१२१॥
देवता गुरवो गावः पितरो लिङ्गिनो नृपाः । यद् वदन्ति नरं स्वप्ने तत्तथैव भविष्यति ॥ १२२ ॥
एतत् स्वप्नानुसारेण भाविपुत्रद्वयं तव । एक आदौ सुतः शीघ्रं चार्वाचारो भविष्यति ॥ १२३ ॥
श्रुत्वैतन्मुदिता राज्ञी काले गर्भं दधौ वरम् । गर्भानुभावतस्तस्या जाता रुचिरदोहदाः ॥ १२४ ॥

भूपपूरितनिःशेष-जिनार्चादिकदोहदाः । शुभेऽहनि सुत देवी सूते स्वेन्दुमिवेन्द्रादिग् ॥१२५॥
सन्मान्य स्वजन सर्व-मन्नपानादिनाऽऽदरात् । पुत्रजन्मोत्सव स्फारं चकारावनिनायकः ॥१२६॥
३ विचार्य स्वजनैः सार्द्ध शुकस्वमानुसारतः । शुकराजेति पुत्रस्या-भिधा धात्रीधवोऽभ्यधात् ॥१२७॥
लाल्यमान क्रमात्पथ्य-धात्रीभिस्तन्यपानतः । बभूव पञ्चवर्षीय-पुत्रो जनमनोहरः ॥ १२८ ॥ यत —
"गाहाण रसा महिलाण विब्भमा कविअणस्स वयणाइं । कस्स न हरन्ति चित्तं बालाण मम्मणालावा"॥
६ राजाऽन्यदा वने तस्मिन् क्रीडन् पुत्र-प्रियायुतः । माकन्दाधोनिविष्ट सन् प्रोवाचेति प्रिया प्रति ॥१३०॥
'माकन्दोऽयं प्रिये! सोऽयं यस्मात् शुकमुखोक्तितः । श्रुत्वा त्वन्नाम त्वत्पृष्ठौ धावितोऽहं पुरा ननु ॥१३१॥
आगत्य विपिने तस्मिन् त्वा गाङ्गिलिसुता तदा । परिणीय पुन पश्चा—दागां पुरमहं निजम् ' ॥ १३२ ॥
९ नृपोत्सङ्गस्थितः पुत्रः शृण्वन्नेतत् स्फुटाक्षरम् । मूर्च्छितः पतितः पृथ्व्या विद्युत्पात इवाचिरात् ॥१३३॥
तथाविधं सुतं दृष्ट्वा भूपतिर्गृहिणीयुतः । कोलाहलं तथाऽकार्षीद् यथा तत्रागमज्जनः ॥ १३४ ॥ यतः—
गुरु—गुरुतर—अइगुरुपिउ -माय—अवच्च—पिअजणसिणेहो ० ॥ १३५ ॥
१२ सचन्दनपयःकेलि-दलवातोपचारतः । चक्रे सचेतनः पुत्रो भूपादिसकलैर्जनैः ॥ १३६ ॥
प्रफुल्लाक्षशुकः पश्य--ज्जनं वक्ति न यावता । तावद् भूपः प्रियायुक्तो विषण्ण ऊचिवानिदम् ॥ १३७॥
हे वत्स ! वचन देहीत्युक्तो यावन्न जल्पति । तदा राजा जगौ पत्नि! रत्नदोषी यमः खलु ॥ १३८ ॥ यतः-

॥ ११ ॥

"शशिनि खलु कलङ्कं कण्टकाः पद्मनाले, उदधिजलमपेयं पण्डिते निर्द्धनत्वम् ।
दयितजनवियोगो दुर्भगत्वं सुरूपे, धनपतिकृपणत्वं रत्नदोषी कृतान्तः" ॥ १३९ ॥
उपचारास्तदाऽनेके कारिता मेदिनीभुजा । आकार्य भूरिशो वैद्यान् नानाशास्त्रविचक्षणान् ॥ १४० ॥
एवं च क्रियमाणेषू–पचारेषु निरन्तरम् । षड्मासा अभवन् नैव शुकराजो जगौ मनाग् ॥ १४१ ॥ यतः–
"वैद्या वदन्ति कफ-पित्त-मरुद्विकारं, सांवत्सरा ग्रहगतं प्रवदन्ति दोषम् ।
भौतोपसर्गनिपुणाः प्रवदन्ति भौतम्, सन्तो वदन्ति च पुराऽकृतपुण्यमेव" ॥ १४२ ॥
जनाग्रहान्नृपोऽन्येद्युः कौमुद्याश्च महोत्सवे । पूर्वस्मिन् विपिने गच्छन् प्रोवाचेति प्रियां प्रति ॥ १४३ ॥
यस्मिंस्तरावयं पुत्रश्छलितः केनाचिचदा । तेनायं दूरतस्त्याज्य इति यावन्नृपो जगौ ॥ १४४ ॥
तस्यैव तावताऽऽम्रस्य तले दध्वान दुन्दुभिः । किमित्युक्ते नृपेणेत्य कश्चित्प्राहेति मानवः ॥ १४५ ॥
स्वामिन्नस्य तरोर्मूले श्रीदत्तस्य मुनीशितुः । तपोध्यानपरस्याद्यो–त्पन्नं केवलमुज्ज्वलम्॥ १४६ ॥ यतः–
"प्रणिहन्ति क्षणार्द्धेन साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्र--तपसा जन्मकोटिभिः॥ १४७ ॥
कर्म्म जीवं च संश्लिष्टं परिजातात्मनिश्चयः । विभिन्नीकुरुते साधुः सामायिकशलाकया ॥ १४८ ॥
रागादिध्वान्तविध्वंसे कृते सामायिकांशुना । स्वास्मिन् स्वरूपं पश्यन्ति योगिनः परमात्मनः ॥ १४९ ॥
समेत्य स्वर्गतो देवा भक्तिभावितमानसाः । कुर्वन्ति केवलज्ञानो–त्सवं रैपत्रकल्पनात् ॥ १५० ॥ यतः–

"पंचसु जिणकल्लाणेसु महरिसितवाणुभावाओ । जम्मंतरनेहेण य आगच्छन्ति सुरा इहइं (यं)" ॥१५१॥
देवी प्राह तदा नाथ ! केवली पृछ्यतेऽधुना । सुतस्य जल्पनोपायो गत्वा तत्र सुभक्तितः ॥१५२॥ यतः–
"सम्भिन्न पासंतो लोग–मलोगं च सव्वओ सव्वं । तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च" ॥१५३॥
ततो राजा परीवार–युतस्तत्रैत्य सप्रियः । प्रदक्षिणादिविधिना ववन्दे श्रीगुरूत्तमान् ॥१५४॥ यतः–
" सचित्तदव्वमुज्झण–मचित्तमणुज्झणं मणेगत्तं । इगसाडी उत्तरासंग अंजली सिरसि जिणादिट्ठे ॥१५५॥
इअ पंचविहाभिगमो अहवा मुच्चंति रायचिन्हाइं । खग्गं १ छत्तो–२ वाणह ३ मउडं ४ चमरे ५ अ पंचमए" ॥१५६॥
उदारैः स्तवनैः स्तुत्वा भक्तितो मेदिनीपतिः । कृतोत्सङ्गसुतः श्रोतु देशनां समुपाविशत् ॥१५७॥ तथाहि–
"सद्वंशजन्म गृहिणी स्पृहणीयशीला, लीलायितं वपुषि पौरुपभूषणश्रीः ।
पुत्राः पवित्रचरिताः सुहृदोऽपदोषाः, स्युर्धर्मतः खलु फलानि पचेलिमानि ॥१५८॥
विरोधिता बन्धुजनेषु नित्यं सरोगता मूर्खजनेषु सङ्गः । क्रूरस्वभावः कटुवाक् सरोषो नरस्य चिह्नं नरकागतस्य ॥
स्वर्गच्युतानामिह जीवलोके चत्वारि नित्यं हृदये वसन्ति । दानप्रसङ्गो विमला च वाणी देवार्चनं सद्गुरुसेवनं च "॥
भूपोऽवगस्य वृक्षस्य तलेऽस्य तनयस्य मे । मुद्रिताऽभूत् कुतो वाणी प्रसद्य कथ्यतां प्रभो ! ॥१६१॥
सूरिः प्रोवाच जीवानां पुण्यपापमयात्मनाम् । सुख–दुःखानि जायन्ते भूरिशः पृथिवीतले ॥१६२॥ यतः–
"कुमुदवनमपश्रि श्रीमदम्भोजखण्डम्, त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।

|| १३ ||

उदयमहिमरश्मिर्याति शीतांशुरस्तम्, हतविधिललितानां ही विचित्रो विपाकः" ॥१६३॥
केऽपि सहस्रंभरयो लक्षंभरयश्च केऽपि नराः । नात्मंभरयः केचिद् फलमेतत् सुकृत-दुष्कृतयोः ॥१६४॥
गुरुः प्राहाऽधुना स्पष्टवक्ता शीघ्रं करिष्यते । राज्ञोक्तं क्रियतां सद्यः स्फुटवक्ता सुतो मम ॥१६५॥
वन्दस्व शुकराजास्मान् विधिनेति गुरूदिते । समुत्थाय मुदा स्पष्टा-क्षरैरेवं स वन्दते ॥१६६॥
'अणुजाणह पसाउ करी'ति शुकेनोक्ते गुरुः प्राह-'इच्छं' । ततः प्राह शुकः-'इच्छामि खमासमणो वंदिउं जावणिज्जाए निसीहिआए मत्थएण वंदामि" ।
ब्रुवन्नेवं मुनिं भक्त्या ववन्दे यावदेव सः । तावत्सर्वो जनश्चक्रे चमत्कारं भृशं हृदि ॥१६७॥
राज्ञोक्तं भगवन्नस्य सुनोरजनि किं मम । ततः पूर्वभवं तस्य गुरुराचष्ट शिष्टराग् ॥१६८॥ तथाहि-
'श्रीभद्दिलपुरे भूपो जितारिः संसदि स्थितः । प्रतीहारेण विज्ञप्त इति प्राञ्जलिनाऽन्यदा ॥१६९॥
स्वामिन्नेको नरो द्रष्टुं त्वामिच्छति वहिः स्थितः । समानयेति भूपोक्ते तेनानीतः पुमान् स च ॥ १७० ॥
भूपोऽप्राक्षीत्कुतः कस्मि-न्नर्थेऽत्रासि त्वमागतः। दूतः प्राहास्ति पूर्वस्यां दिशि लक्ष्मीवती पुरी ॥१७१॥
तस्यां विजयदेवस्य भार्या प्रीतिमती सती । असूत तनयान् वर्यान् सोम-भीम-धना-र्जुनान् ॥१७२॥
तेषां जन्मोत्सवे निष्पादिते प्रीतिमती प्रिया । सूते स्म तनये हंसी-सारस्याह्वे क्रमात् वरे ॥१७३॥
क्रमेण पण्डितोपान्ते पाठ्यमाने सुते उभे । नृपेण सर्वशास्त्रेषु समभूतां विचक्षणे ॥१७४॥ यतः-

"आहार-निद्रा-भय-मैथुनानि सामान्यमेतत् पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणा ज्ञानेन हीनाः पशुभिः समानाः"॥
मिथःप्रीतिपरे हंसी–सारस्यौ नृपतेः सुते । देहच्छाय इवाभीक्ष्णं तिष्ठतो न कदा पृथक् ॥१७६॥
३ अन्येद्युर्नृपतिः प्रेक्ष्योद्वाहयोग्ये सुते उभे । प्राह हे तनये ! कस्मै कुत्र देशे ददाम्यहम् ॥१७७॥
ऊचतुर्यदि तुष्टोऽसि तातेदानी त्वमावयोः । तदैकस्मै वरायात्रां ददस्व स्याद् यतः सुखम् ॥१७८॥
वरं वरयते कन्या माता वित्तं पिता कुलम् । बान्धवाः स्वजनमिच्छन्ति मिष्टान्नमितरे जनाः ॥१७९॥
६ एकं वरं ददामीति गदित्वा नृपतिर्व्यधात् । विचार्य सज्जनैः सार्धं स स्वयंवरमण्डपम् ॥१८०॥
लग्नं लात्वाऽनघं माघ–सिताष्टम्या महीपतिः। प्रेषयामास भूयिष्ठ-देशे कुङ्कुमपत्रिकाः ॥१८१॥
तेनात्राहं महीशेन प्रेषितो भवदन्तिके । तत्रागच्छेत् भवान् वाच–यित्वा कुङ्कुमपत्रिकाम् । १८२। तथाहि—
९ जितारिभूपतिर्वाच–यित्वा कुङ्कुमपत्रिकाम् । सद्यः शुद्धपरिवारो ययौ तत्र स्वयंवरे ॥ १८३ ॥
अंग–वंग–तिलंगादि–देशाधीशान् बहून् वरान् । दूतीकीर्तिततद्वंशान् समतीत्य क्रमाच्चदा ॥ १८४ ॥
सुखासनसमासीने भूपपुत्र्यावुभे अपि । *जितारेश्चक्रतुः कण्ठे वरमाला मनोरमाम् ॥ १८५ ॥ युग्मम् ।
१२ स द्रूपे नृपतेः पुत्र्यौ परिणीय सदुत्सवम् । लब्धभूरितुरङ्गभो जितारिरचलत्ततः ॥ १८६ ॥
प्रियायुग्मयुतं भूपं जितारिं समहोत्सवम् । आगच्छन्तं निजावासे श्रुत्वा तत्रैति स्त्रीजनः ॥ १८७ ॥

* जितारेर्दधतु. कठे–ग ।

॥ १५ ॥

एकनेत्राञ्जनक्षेपा काचिन्नारी कृतत्वरा । द्रष्टुं भूमीपतिं पत्नी–युतं तत्र समागमत् ॥ १८८ ॥
एवं कृतार्द्धकार्याणि मुक्त्वा बह्वयो मृगेक्षणाः । राजमार्गे नृपं द्रष्टुं समाजग्मुः कृतत्वराः ॥ १८९ ॥ यतः—
३ "तिहं तिन्नि पीआरडां कलि कज्जल सिन्दूर । आनि जि तिन्नि पीआरडां दूध जमाइ तूर" ॥ १९० ॥
जितारिर्भूपतिर्हंसी–सारसीभ्यां समन्वितः । शोभते रतिप्रीतिभ्या–मिवाभीक्ष्णं मनोभवः ॥ १९१ ॥
अन्येद्युर्गृहिणीयुग्म–युतो जितारिभूपतिः । उद्याने श्रीधराचार्यान् वन्दितुं समुपागमत् ॥ १९२ ॥
६ "धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलम् , धर्मेणैव भवन्ति निर्मलयशो–विद्या–र्थसम्पत्त्वयः ।
कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवति च स्वर्गापवर्गप्रदः ॥१९३॥ अत्र धर्मोपदेशः।
धर्मं जीवदयामूलं जितारिर्मेदिनीपतिः । गृहीत्वा गृहिणीयुक्तो निजावासं समीयिवान् ॥ १९४ ॥ यतः–
९ "आसन्ने परमपए पावेयव्वम्मि सयलकल्लाणे । जीवो जिणिंदभणिअं पडिवज्जइ भावओ धम्मं " ॥ १९५ ॥
बबन्ध सरला हंसी नृयोग्यं कर्म धर्मतः । स्त्रीयोग्यं सारसी माया–विनी वक्राशया सदा ॥ १९६ ॥ यतः–
"संतुट्ठा सुविणीया अज्जवजुत्ता य जो थिरा निच्चं । सच्चं जंपइ महिला सा पुरिसो होइ मरिऊणं ॥ १९७ ॥
१२ जो चवलो सढभावो मायाकवडेहिं वञ्चए सयणं । नहि कस्स य वीसत्थो सो पुरिसो महिलीआ होइ " १९८ ॥
कियत्यपि गते काले सारसी कुटिलाशया । कुर्वाणा कलहं हंस्या सार्द्धं तिष्ठति संततम् ॥ १९९ ॥
एकद्रव्याभिलाषे हि जीवानां द्विविधं मनः । विशेषतः सपत्नीनां सरलत्वं सुदुर्लभम् ॥ २०० ॥

गवाक्षस्थो बहिः सार्थं व्रजन्त मेदिनीपतिः । दृष्ट्वाऽन्यदा जगौ भर्त्यान् प्रतीदं वचनं द्रुतम् ॥ २०१ ॥
कुत्रत्योऽयं व्रजन् सार्थो दृश्यते साम्प्रतं ततः । ज्ञात्वेति सेवकेरूचे भूपतेरग्रतः स्फुटम् ॥ २०२ ॥
श्री शङ्खपुरवास्तव्यः संघः श्रीविमलाचले । युगादीश जिनं नन्तुं साम्प्रतं याति भूपते! ॥ २०३ ॥
सङ्घमध्ये नृपो गत्वा सत्रः श्रीश्रुतसागरान् । कल्याणीभक्तितो नत्वा पप्रच्छेति कृताञ्जलिः ॥ २०४ ॥ यतः–
"विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम्। अनृत द्यूतकारेभ्यः स्त्रीभ्यः शिक्षेत कौतुकम् (कैतवम्) ॥२०५॥
किमर्थं गम्यते तत्र भवद्भिर्विमलाचले । प्रोचुः श्रीसूरयस्तस्य माहात्म्यं विद्यते महत् ॥२०६॥ यतः–
"सुधाञ्जनं सज्जनलोचनेषु मिथ्यादृशामक्षिषु धूमरेखां। पश्यन्ति तत्रादिममर्हतं(न्तं)ये संसारसिंधुं लघु ते तरन्ति ॥
पुण्यं चिनोति नरजन्म फलं तनोति, पापं लुनाति नयनानि सतां पुनाति ।
दूरेऽपि दर्शनपथं समुपागतो यः, श्रीमानसौ विजयतां गिरिपुण्डरीकः " ॥२०८॥
तस्मिन् तीर्थे जिनाधीशा–श्चत्वारः समवासरन् । अतश्च संसरिष्यन्ति जिना एकोनविंशतिः ॥२०९॥ यतः–
"सिरिनेमिनाहवज्जा जत्थ जिणा रिसहपमुहवीरंता । तेवीसं समोसरीआ सो विमलगिरी जयउ तित्थं " ॥२१०॥
निशम्य तीर्थमाहात्म्यं तत्क्षणात् भूपतिस्तदा। पश्यता मन्त्रिणामादा–दभिग्रहमिति स्फुटम् ॥२११॥
नत्वैव श्रीयुगादीशं मया विमलपर्वते । ग्राह्यमत्र पयः पाद–चारिणा गम्यमेव च ॥२१२॥
जितारिर्भूपतिः सङ्घ–सार्द्धेन गृहिणीयुतः । चचाल श्रीयुगादीशं नन्तुं श्रीविमलाचले ॥२१३॥

॥ १७ ॥

गच्छतो नृपतेः शीघ्र–मभूवन् सप्त वासराः । महाटव्यामभूत् सर्वः सङ्घो व्याकुलमानसः ॥२१४॥
मन्त्रिणा सूरयः पृष्टाः कियान् मार्गोऽस्ति साम्प्रतम् । गुरुणोचे च काश्मीर–देशोऽयं विद्यते ननु ॥२१५॥
मन्त्री प्रोवाच भूपेना–भिग्रहो दुष्करो लले । देव्यादिः सकलो लोको व्याकुलोऽजनि सम्प्रति ॥२१६॥ [मित्यादि ।
आकार्य नृपतिं सूरिः प्रोवाचेति स्फुटाक्षरम् । सहसाऽभिग्रहो लातो भवता तेन पार्यताम् ॥ यतः–उक्तं सहसागारेण–
इत्यादि कथिते भूपोऽभिग्रहं नैव मुञ्चति। ततश्चिन्तापरो मन्त्री बभूवातीवदुःखितः ॥२१८॥
सुप्तस्य मन्त्रिणः स्वप्ने तीर्थेशो गोमुखोऽगदत् चिन्तां कुरुष्व मा चित्ते करिष्येऽहं तवेप्सितम् ॥२१९॥
प्रभाते प्रथमे यामे सङ्घस्य गच्छतोऽध्वनि । आनयिष्याम्यहं सत्यं सम्मुखं विमलाचलम् ॥२२०॥
नत्वा देवं महीशाद्यैः पूरणीया अभिग्रहाः। एवं स्वप्नो ददे तेना–न्येषां प्रत्ययहेतवे ॥२२१॥
प्रभाते सूरि–भूपाला–मात्याद्या बहवो जनाः । मिलित्वा स्वप्नवृत्तान्तं नैशमूचुः परस्परम् ॥२२२॥
चलन् मार्गे नृपस्तीर्थं दृष्ट्वा श्रीसङ्घसंयुतः । अपूरिष्ट जिनार्चादि–चारुकृत्यैरभिग्रहम् ॥२२३॥
द्रव्यभावस्तवं चारु–पुष्पैः स्तोत्रैश्च सुन्दरैः। कृत्वा महीपतिर्जन्म चकार सफलं निजम् ॥२२४॥ अत्र नमस्कारा वाच्याः।
प्रभुं नत्वा नृपस्यांह्री न गन्तुं वहतोऽग्रतः । जिनं नत्वा चलित्वा च वलते च महीपतिः ॥२२५॥
एवं पुनः पुनर्भूपं कुर्वाणं वीक्ष्य मन्त्रिणः । प्रोचुः स्वामिन् ! किमारब्धमीदृक्षं च(व)लनादिभिः ॥२२६॥
राज्ञोक्तं नहि जानामि क्रमौ मे चलतश्च न । मन्त्री प्राहात्र नगरं स्थाप्यते स्थीयते पुनः ॥ २२७ ॥

सस्थाप्य नगरीं नाना–जिनेभ्यालयमालिताम् । श्रीविमलाभिधां तत्र तस्थौ धर्मपरो नृपः ॥ २२८ ॥
इतो गोमुखयक्षेणा–गत्योक्तं नृपतेः पुरः । विकुर्व्य रचितः शैलः पुण्डरीकाभिधो मया ॥ २२९ ॥
भवतोऽभिग्रहः पूर्णः सङ्घस्य चाखिलः पुनः । तेनामुं पर्वतं संह–रिष्यामि साम्प्रतं द्रुतम् ॥ २३० ॥
त्वयाऽतो मुख्यसिद्धाद्रौ सुराष्ट्रदेशभूषणे । गत्वा श्रीऋषभो देवो वन्दितव्यः सुभावतः ॥ २३१ ॥ यतः–
विकुर्वितं समं वस्तु गेहादि चित्तहर्षदम् । पक्षादुपरि नो कुत्र तिष्ठत्युक्तं जिनागमे ॥ २३२ ॥
ततोऽन्येद्युर्नृपः सङ्घ–सहितो विमलाचले । युगादीशं जिनं नन्तुं ययौ मुदितमानसः ॥ २३३ ॥
चारुस्तोत्र–महापूजा–ध्वजारोपादिभिर्भृशम् । श्रीसङ्घसहितो भूप–श्चक्रवान् सफलं जनु· ॥ २३४ ॥
विधाय रुचिरां यात्रां गृह्णन् मर्त्यजनुःफलम् । श्रीविमला पुरीं भूपः समागात् सङ्घसंयुतः ॥ २३५ ॥
ततो जितारिनृपतिः पुरीतो, गजाश्वसत्पत्तिरथादिशाली । प्रियायुतश्चारुमहोत्सवेन श्रीभद्दिलायां पुरि द्रागियाय ॥
अन्येद्युस्तत्पुरोद्याने गुरून् सिद्धान्तसागरान् । श्रुत्वाऽऽगतान् नृपः सान्तः–पुरो वन्दितुमीयिवान् ॥ २३७ ॥
पूज्यपूजा–दया–दानं तीर्थयात्रा–जप–स्तपः । श्रुतं परोपकारश्च मर्त्यजन्मफलाष्टकम् ॥ २३८ ॥
जिनार्चादिफलं स्वर्गा–पवर्गादिसुखं तदा । श्रुत्वा राजाऽभव–ज्जीवदयाधर्मणि (र्मे च) कर्मठः ॥२३९
कुर्वन् राज्य महीशोऽन्ते गृहीत्वाऽनशनं मुदा । दीयमानान् नमस्कारान् शुश्राव ध्यानतत्परः ॥ २४० ॥
अत्रान्तरे युगादीश–प्रासादशिखरस्थितम् । शब्दायन्तं शुकं श्रुत्वा ददौ तत्र मनो नृपः ॥ २४१ ॥

॥ १९ ॥

पश्यन् महीपतिः कीरं प्रासादशिखरस्थितम् । मृत्वा प्रान्ते शुकीभावं प्राप कर्मनियोगतः ॥ २४२ ॥ यतः
"ठाणं उच्चु-च्चयरं मज्झं हीणं च हीणतरगं वा । जेण जहा गंतव्वं चिट्ठा वि से तारिसी होइ" ॥ २४३ ॥
निरन्तरं कृतानेक-पुण्यपापमयात्मनाम् । जायते प्राणिनामन्ते या मतिः सा गतिर्भवेत्" ॥ २४४ ॥
लोकैरुक्तमयं भूपः पुण्यवान् जग्मिवान् दिवम् । यतो गतागतिं सम्यक् छद्मस्थो वेत्ति नो जनः ॥ २४५ ॥
मृत्युकार्ये कृते हंसी-सारस्यौ गुरुसन्निधौ । वैराग्यवासितस्वान्ते प्रव्रज्यां ललतुर्मुदा ॥ २४६ ॥
कुर्वत्यौ षष्ठकल्पादि तपो घोरं निरन्तरम् । सद्ध्यानाद् ययतुर्हंसी-सारस्यौ प्रथमं दिवम् ॥ २४७ ॥
हंसी-सारसिकाजीवौ तत्र देव्यौ सुखस्थितौ । पश्चाद् भवस्य संबन्धं पश्यतः स्मेति सादरम् ॥ २४८ ॥
अवधिज्ञानतो ज्ञात्वा निजं कान्तं शुकं वने । समेत्य प्रतिबोधाय ते देव्याविदमूचतुः ॥ २४९ ॥
त्वया पूर्वं भवे कीर ! कृतं पुण्यं वहु स्फुटम् । आर्त्तध्यानेन च प्रान्ते तिर्यक्त्वं प्रापि दैवतः ॥ २५० ॥
तेनाधुना शुभं ध्यानं कुरु कीर ! स्वमानसे । येन ते जायते स्वर्गापवर्गादि सुखं क्रमात् ॥ २५१ ॥
"पंचसु जिणकल्लाणेसु महरिसितवाणुभावाओ । जम्मंतरनेहेण य आगच्छन्ती सुरा इहयं" ॥ २५२ ॥
एवं धर्मोपदेशेन ग्राहितोऽनशनं शुकः । मृत्वा स्वर्गेऽगमत् तत्र पूर्वपत्नीविराजिते ॥ २५३ ॥
न सा जाई न सा जोणी न तं ठाणं न तं कुलम् । न जाया न मुआ जत्थ सव्वे जीवा अणंतसो ॥ २५४ ॥
च्युते देवीद्वये पूर्वं देवो दुःखेन पूरितः । न चिक्रीड मनाग् वापी-वनादिषु कदाचन ॥२५५॥ यतः-

"ईसा-विसाय मय-कोह-माया-लोभेहिं एवमाईहिं । देवा वि समभिभूआ तेसिं कुचो सुहं नाम ॥२५६॥
देवा विसयपसत्ता नेरइआ विविहदुःखसंतत्ता । तिरिआ विवेगविगला मणुआणं धम्मसामग्गी" ॥२५७॥
धर्मं श्रोतुमना धर्म-घोषकेवलिसन्निधौ । अन्येद्युः स सुरो लक्ष्मीपुरोद्याने समागमत् ॥२५८॥ अत्रोपदेशः ।
देशनान्ते सुरोऽप्राक्षीत् जितारिर्गुरुसन्निधौ । बोधिः किं सुलभा मे स्याद् दुर्लभा वा निगद्यताम् ॥२५९॥
गुरुः प्रोवाच सुलभा बोधिस्तेन तु* भाविनी । देवेन कथमित्युक्ते पुनः प्राहेति केवली ॥२६०॥
ये त्वत्प्रिये च्युते पूर्वं तन्मध्यात् शुभकर्मतः । हंसीजीवः क्षितिमति-क्षितेशोऽभून्मृगध्वजः ॥२६१॥
वनमध्ये युगादीश-सद्मोपान्ताश्रमेऽभवत् । श्रीगागलिऋषेः पुत्री सारस्या जीव इत्यपि ॥२६२॥
जाताऽस्ति सारसीजीव श्रीगागलिऋषेः पुनः । सुता कमलमालेति विमलाचलसन्निधौ ॥२६३॥ पाठान्तरम् ।
त्वं तयोस्तनयो भूत्वा लब्ध्वा जातिस्मृतिं पुनः । लप्स्यसे विमला बोधिं संसाराब्धितरीनिभाम् ॥२६४॥
+आकर्ण्यैतत् गुरोरास्यात् स सुरो मुदिताशयः । कीररूपं चकाराशु सर्वावयवसुन्दरम् ॥२६५॥
त्वां च तत्राश्रमे नीत्वा परिणाय्य ऋषेः सुताम् । प्रददौ स्फारशृङ्गारं स्नेहेन निर्जरः स च ॥२६६॥
पुनस्तेनैव रूपेण त्वा नीत्वा नगरे निजे । मन्वानः सुलभां बोधिं स्वस्मिन् स्वर्गे ययौ सुरः ॥२६७॥

॥ २१ ॥

*भविष्यति क । + मृगध्वजस्य कमलमालायास्तनयो भवान् । अभविष्यद् यदि ते बोधि-बीजं तदा भविष्यति ॥-इति कपुस्तकेऽधिक. पाठः ।

काले च्युत्वा सुरः सोऽपि जितारिस्तेऽभवत् सुतः । शुकराजेति तस्याह्वां त्वमदाः समहोत्सवम् ॥२६८॥
त्वामत्र भार्यया सार्द्धं वार्तां कुर्वाणमैक्ष्य च । प्राप्तजातिस्मृतिर्दध्या–वेवं सूनुरयं तव ॥२६९॥
एतौ मे पितरौ पूर्व–भवेऽभूतां प्रिये प्रिये । ब्रवीम्यहं कथं तात ! मातरेवं च साम्प्रतम् ॥२७०॥
अतो मे श्रेयसे मौनं विचिन्त्येति निजाशये । मौनी बभूव ते पुत्रो ज्ञेयं सत्यमिदं त्वया ॥२७१॥
दधानं मानसे दुःखं शुकराजं समीक्ष्य च । प्रोवाच केवली चित्रं विद्यते भवनाटकम् ॥२७२॥ यतः—
,'देवो नेरइउत्ति अ कीड-पयंगुत्ति माणुसो एसो । रूवस्सी य विरूवी सुभागी दुक्खभागी अ ॥२७३॥
रायत्ति अ दमगुत्ति अ० ॥२७४॥ नवि इत्थ कोइ नियमो"०॥२७५॥
यः पिता स भवेत्पुत्रो यः पुत्रः स पिता भवेत् । या कान्ता सा भवेन्माता या माता सा भवेत् पिता ॥२७६॥
तस्मान्न रागो कर्त्तव्यो विद्वेषश्च मनागपि। व्यवहारो विधातव्यः केवलं समताविदा ॥२७७॥
न सा जाई न सा जोणी०॥२७८॥
"माता–पितृसहस्राणि पुत्र–दारशतानि च । संसारेऽत्र व्यतीतानि कस्याहं कस्य बान्धवाः ॥२७८॥
"अहं तात ! त्वया जातो मया त्वं च सहस्रशः । सुत एव पिता जात–स्तात मायाविजृम्भितम्" ॥२७९॥
बभूव मम वैराग्यं यथाऽऽशु श्रूयतां तथा । भरतेऽत्र पुरं रम्यमभून्मन्दिरनामतः ॥ २८० ॥ [श्रीदत्तकथा]

मूरकान्तो नृपस्तत्र *प्रशशास प्रजा नयात्। तस्य मान्योऽभवत्सोम–श्रेष्ठी श्रेष्ठि–शिरोमणिः || २८१ ||
गृहिणी तस्य सोमश्रीः श्रीदत्तस्तनयस्तयोः । श्रीमतीति प्रिया तस्य बभूव शीलशालिनी || २८२ ||
"पत्नी प्रेमवती सुतः सविनयो भ्राता गुणालंकृतः, स्निग्धो बन्धुजनः सखाऽतिचतुरो नित्य प्रसन्नः प्रभुः ।
निर्लोभोऽनुचरः परार्त्तिशमने प्राप्तोपयोगं धनम्, कल्याणाभ्युदयेन सन्ततमिदं कस्यापि संपद्यते || २८३ ||
सोमोऽन्यदा प्रियायुक्तः क्रीडितुं विपिने ययौ । तावत्तत्रागतः सूर–कान्तः सान्तःपुरस्तदा || २८४ ||
निजरूपजितस्वर्गि–वधूं सोमश्रियं तदा । वीक्ष्य रागान्नृपः स्वान्तःपुरे चिक्षेप दुष्टधीः || २८५ || यतः–
"विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति। अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः" ||२८६||
दीनः श्रेष्ठी द्रुतं भूप–मान्यानामेत्य मन्दिरम् । प्राह प्रियापहारादि–स्वरूपं गद्गदस्वरम् || २८७ ||
तेऽपि गत्वा नृपोपान्ते प्रोचुरेवं स्फुटाक्षरम् । जायते दुष्कृतं घोरं परस्त्रीहरणे भृशम् || २८८ ||
सूरकान्तः नृपः प्राह सोमश्रियं वणिक्प्रियाम् । नहि मुञ्चाम्यह प्राणा–त्ययेऽपि किं प्रजल्पनैः ||२८९||
ततस्तैर्मन्त्रिभिः प्रोक्तं आगत्य श्रेष्ठिसन्निधौ । गजः कर्णे कथं धार्यो निवार्यो नृपतिः कथम् || २९० ||
विद्युत्पातः कथ धार्यो नदीवेगः कथ पुनः। कथ धार्योऽनिलस्तीव्रः सदा वह्निः शरीरिणा || २९१ ||
माता यदि विषं दद्यात् पिता विक्रयते सुतम् । राजा हरति सर्वस्वं का तत्र परिदेवना || २९२ ||

* ररक्ष जनतां न–इति कपुस्तके।

|| २३ ||

ततः श्रेष्ठी समेत्यौकः स्वं प्राहेति सुतं प्रति । राज्ञा दुष्टेन त्वन्माता गृहीता साम्प्रतं बलात् ॥ २९३ ॥
तथापि वीक्ष्यते पुत्र वालिता द्रविणव्ययात् । स्वगृहे सन्ति द्रव्यस्य षट् लक्षा साम्प्रतं ननु ॥ २९४॥
तन्मध्यादर्द्धमादाय सेवित्वा बलिनं नृपम् । वालयिष्ये बलादेव शीघ्रं च तव मातरम् ॥ २९५॥
विमृश्येति धनं भूरि लात्वा श्रेष्ठी रहस्तदा । चचाल दिशि कस्यांचित् मुत्कलाप्य सुतं द्रुतम् ॥ २९६ ॥
श्रीदत्तस्य गृहस्थस्य प्रियाऽसूतान्यदा सुताम् । पुत्रीजन्म समाकर्ण्य श्रीदत्तो ध्यातवानिति ॥ २९७ ॥ यतः–
"माय–पिअराण विरहो धणनासो अज्ज पुत्तिआजम्म । नरनाहोपि विरुद्धो दइवं रुट्ठं न किं देइ ॥ २९८ ॥
जम्मंतीए सोगो वड्ढन्तीए वड्ढए चिन्ता । परिणीआए दण्डो जुवइपिआ दुक्खिओ निच्चम् ॥२९९॥
निअघरसोसा परगेहमण्डणी कलिकलङ्ककुलभवणम् । जेहिं न जाया धूआ ते सुहिआ जीवलोगम्मि" ॥३००॥
शङ्खदत्तेन मित्रेण श्रीदत्त इति भाषितः । धनं विना न ना भाति तेन श्रीरर्ज्यतेऽधुना ॥३०१॥ यतः–
" शीलं शौचं तपः क्षान्ति–र्दाक्षिण्यं मधुरता कुले जन्म । न विराजन्ति हि सर्वे वित्तहीनस्य पुरुषस्य" ॥३०२॥
गत्वा तेनाम्बुधौ लक्ष्मीरर्ज्यते भूयसी किल । अर्धमर्धं गृहीष्याव–स्तस्या आवां विभागतः ॥३०३॥
कृत्वेति निश्चयं पत्नीं दशाहतनयायुताम् । विमुच्य सदनेऽचालीत् श्रीदत्तोऽम्बुधिवर्त्मनि ॥३०४॥
श्रीदत्तो मित्रसंयुक्तो महाम्भोधौ व्रजन् क्रमात् । लक्ष्म्यर्थं सिंहलद्वीपं समागान्मुदिताशयः ॥३०५॥ (युग्मम्)
स्थित्वा तत्र नवाब्दानि समुपार्ज्य धनं बहु । श्रुत्वा लाभं कटाहाह्व–द्वीपं प्रति प्रचेलतुः ॥३०६॥

"धनहीनः शतमेकं सहस्रं शतवानपि । सहस्राधिपतिर्लक्षं कोटिं लक्षेश्वरोऽपि च ॥२०७॥
कोटीश्वरो नरेन्द्रत्वं नरेन्द्रश्चक्रवर्तिताम् । चक्रवर्ती तु देवत्वं देवोऽपीन्द्रत्वमिच्छति" ॥२०८॥–इत्यादि।
विहृतिं तत्र कुर्वद्भ्यां द्वाभ्यां लेखे कृते सति । अष्टौ कोट्यो धनस्यासन् पूर्वपुण्योदयात्तयोः ॥२०९॥
क्रयाणकानि भूयांसि गजाश्वादींश्च भूरिश. । गृहीत्वा चेलतुस्तौ स्वं स्थानं प्रत्यब्धिवर्त्मना ॥२१०॥
गच्छन्तौ तौ निरीक्ष्यैकां मञ्जुषा जलमध्यतः । निन्यतुर्धीवरात्प्रेक्ष्य निजोपान्ते प्रमोदतः ॥२११॥
ताभ्यामिति मिथः प्रोक्तं यन्मध्येऽस्या भविष्यति । स्वर्ण–रत्नादि तत्सर्वं विभज्यार्द्धेन गृह्यते ॥२१२॥
इत्युक्त्वोद्घाटिता पेटा वणिग्भ्यां यावदेव हि । तावदेका कनी दृष्टा निम्बपत्रोपरि स्थिता ॥२१३॥
निरीक्ष्याचेतना नील–वर्णां तामिति जल्पतः । नूनमेषाऽहिना दष्टा जले केन प्रवाहिता ॥२१४॥
शङ्खदत्तो जगावेवं जीवयिष्याम्यहं ननु । इत्युक्त्वा मन्त्रपूतेनाम्बुना सज्जीकृता द्रुतम् ॥२१५॥
सद्रूपां तां निरीक्ष्यावक् शङ्खदत्त इति स्फुटम् । एतामहं हि लास्यामि जीवितव्यप्रदानतः ॥२१६॥
श्रीदत्तः प्राह मा वादी–र्मित्रैवं साम्प्रतं स्फुटम् । यतोऽर्द्धमर्द्धमावां हि लास्याव इति जल्पितम् ॥२१७॥
त्वं किञ्चिद् विभवं लात्वा मह्यमेनां प्रदेहि भोः । शङ्खदत्तोऽपि तत्रैवं जगौ दारुणलोचनः ॥२१८॥
मयि जीवति रे दुष्ट पापिष्ठ निष्कृपाशय । गृहीष्यासि कथं कन्या–मेनां श्रीदत्त । साम्प्रतम् ॥२१९॥ यतः–
"हा नारी निर्मिता केन सिद्धिस्वर्गार्गला खलु । यत्र स्खलन्ति हा मूढाः सुरा अपि नरा अपि ॥२२०॥

॥ २५ ॥

वाला अपि बलात्कारान् मनो बलवतामपि । गृहीत्वा मीनमिव हा पीडयन्ति मृगेक्षणाः ॥३२१॥
रामाभिर्मोहितो जीवो न जानाति हिताहितम् । हताखिलविवेकाभि–र्वारुणीभिरिव स्फुटम् ॥३२२॥
प्राप्तुं पारमपारस्य०॥३२३॥
विवदन्तौ भृशं तौ च दृष्ट्वा निर्यामका जगुः । विवादो विद्यते भूरि–दुःखदायी न संशयम् ॥३२४॥
दिनद्वयाध्वनि स्वर्ण–कूलं नाम्ना तटं पुरम् । विद्यन्ते चतुरास्तत्र भूरिशो भूपतेर्नराः ॥३२५॥
विवादं युवयोस्तत्र ते भङ्क्ष्यन्ति नरोत्तमाः। श्रुत्वैतचौ तदा वादं मुञ्चेते स्म परस्परम् ॥३२६॥ [निश्चितं दापयिष्यते।
श्रीदत्तोऽचिन्तयन्मार्गे नूनमेषा मृगेक्षणा । अस्मै जीवितदानत्वात् लोकेन दापयिष्यते ॥३२७॥ लोकेन जीवदायास्मै
अतोऽधुना करिष्याम्युपायं–किंचिदहं रहः । ध्यात्वेति मायया मित्रं विश्वासयति निर्दयः ॥ ३२८ ॥ यतः–
"मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं कर्त्तरीतुल्यं त्रिविधं धूर्तलक्षणम् ॥ ३२९ ॥
रात्रावट्टालके स्थित्वा श्रीदत्तः प्रोचिवानिदम् । हे मित्र ! कौतुकं चारु दृश्यतेऽब्धौ महत्तरम् ॥ ३३० ॥
मत्स्योऽष्टवदनो याति यानस्याधोऽधुना महान् । शङ्खदत्तस्ततो द्रष्टुं लग्नो यावत्प्रयत्नतः ॥ ३३१ ॥
श्रीदत्तश्छद्मना मित्रं क्षिप्त्वा पाथोनिधौ द्रुतम् । तन्वानो निकृतिं प्राह जनाऽग्रे गद्गदस्वरम् ॥ ३३२ ॥
हे मित्र ! त्वां विना प्राणा यास्यन्ति मम निश्चितम् । इत्यादि बहुशो जल्पन् रोदयत्यखिलं जनम् ॥ ३३३ ॥
लोकवाक्यात् शुचं मुक्त्वा स्वयं प्रीतस्ततोऽचलत् । श्रीदत्तः प्रययौ स्वर्णकूलं नाम्ना तटं पुरम् ॥ ३३४ ॥

श्रीदत्तेन तुरङ्गोभा ढौकिता धनभूपतेः । नैगमाय ददे तस्मै सन्मान दुष्टचेतसा ॥ ३३५ ॥
यानात्कन्यान्वित वस्तु समुत्तार्याखिलं तदा । पणायामास वस्तूनि मुक्तशुल्को वणिग्वरः ॥ ३३६ ॥
आकार्य गणकान् कन्या मङ्गीकर्तुं वणिक् तदा । ज्ञात्वा मुहूर्तमनिशं ययौ भूपतिसंसदि ॥ ३३७ ॥
श्रीदत्तो नृपतेः पार्श्वे चार्वीं चामरहारिणीम् । दृष्ट्वाऽप्राक्षीत् स्त्रियस्तस्याः स्वरूपमेककं नरम् ॥ ३३८ ॥
तेनोक्तमनया राज–मान्यया स्वर्णरेखया । सार्द्धं वार्तां करोत्येकवार–मेव नरः स च ॥ ३३९ ॥
योऽस्या ददाति पञ्चाशद्–दीनारान्मानपूर्वकम् । यतोऽस्तीयं महीशस्य मान्यं पात्रं मनोहरम् ॥३४०॥ युग्मम् ।
श्रीदत्तो मोहितो दत्त्वा दीनारान् तत्क्षणाद् रहः । रथारूढां कनीयुक्ता तामादाय वनं ययौ ॥३४१॥
निविश्य चम्पकस्याधः श्रीदत्ते स्त्रीद्वयान्विते । क्रीडां कुर्वति तत्रागात् वानरीसहितः कपिः ॥३४२॥
स्वर्णरेखां प्रति प्राह श्रीदत्तः कौतुकी तदा । वानर्योऽस्य कपेः किं स्यु–रेतास्त्वं ब्रूहि मेऽग्रतः ॥३४३॥
तयोक्त जननी काचित् स्वसा काचित्सुता पुनः । भवन्त्यन्येऽपि सम्बन्धा भूरिशः किं ब्रवीम्यहम् ॥३४४॥ यतः–
"धिग् जन्म पशुजन्तूना यत्र नास्ति विवेकिता । कृत्याकृत्यविचारेण विना जन्म निरर्थकम् ॥३४५॥
आस्तन्यपानाज्जननी पशूना–मादारलाभाच्च नराधमानाम् । आगेहकर्मेव तु मध्यमाना–माजीवितात्तीर्थमिवोत्तमानाम्"॥
श्रुत्वेतद् वानरो गच्छन् वलित्वाऽरुणलोचनः । श्रीदत्तं प्रोचिवानेवं स्फारयन् वचनं दृढम् ॥३४७॥
पश्यस्यद्रौ ज्वलन्तं त्व न पश्यसि पदोरधः । रे दुराचार पापिष्ठ परदोषावलोकतः ॥३४८॥ यतः–

॥ २७ ॥

"राई–सरिसवमित्ताणि पर छिद्दाणि पाससे। अप्पणो बिल्लमित्ताणि पासन्तो वि न पाससे ॥३४९॥
सर्वः परस्य पश्यति वालाग्रादपि तनूनि छिद्राणि। नात्मगतानि पश्यति हिमगिरिशिखर प्रमाणानि" ॥३५०॥
३ क्षिप्त्वाऽब्धौ मित्रमाधाय स्वाङ्के मातृ–सुते पुनः। परदोषान् वदन् श्वभ्र–कूपे आशु पतिष्यसि ॥३५१॥ यतः–
"मन्मनत्वं काहलत्वं मूकत्वं मुखरोगिताम्। वीक्ष्यासत्यफलं नैव पुमान् (वदेत्) कूटं कदाचन "३५२॥
इत्युक्त्वोत्प्लुत्य सहसा क्वचिद्दूरे ययौ कपिः। श्रीदत्तो ध्यातवानेवं गदितं कपिना कथम् ॥३५३॥
६ मम मातृ–सुते दूरे स्यातां वर्णादनीदृशे। तेन तयोः कथंकार–मत्र संभावना भवेत् ॥३५४॥
श्रीदत्तः प्राह काऽसि त्वं स्वर्णरेखे! वदाधुना। पशुवाक्ये मुधा मूढः पतितोऽसीति सा जगौ ॥३५५॥
तत उत्थाय श्रीदत्तो वने भ्राम्यन्नितस्ततः। दृष्ट्वैकं मुनिमानम्य पप्रच्छेति कृताञ्जलिः ॥३५६॥
९ भो मुने! कपिना भ्रान्ति–समुद्रे पातितोऽस्मि हा!। तेन सज्ज्ञानयानेन मामुत्तारय सत्तम! ॥३५७॥ यतः–
"हुन्ति परकज्जनिरया निअकज्जपरंमुहा फुडं सुअणा। चन्दो धवलेइ महीं न कलङ्कं अत्तणो फंसे"॥३५८॥
अवधिज्ञानतो ज्ञात्वा मुनिराचष्ट शिष्टवाग्। यदुक्तं कपिना सत्यं तत् त्वं जानीहि निश्चितम् ॥३५९॥
१२ श्रीदत्तोऽवक् सुता–मात्रोः सम्बन्धं कथयाधुना। मुनिः प्राह तनूजायाः सम्बन्धः श्रूयतां धुरि ॥३६०॥
दशाहजातां तनयां यदा त्वं मुक्त्वा धनार्थं चटितोऽसि याने। तदा पुरे तत्र विपक्षभीते–श्चलाचलोऽशेषजनो बभूव ॥
गङ्गातटस्थिते सिंह–पुरे त्वद्गृहिणी द्रुतम्। लात्वा सुतामगात् स्वीय–बान्धवानां च सन्निधौ ॥३६२॥

जग्मुरेकादशाब्दानि त्वत्पत्न्या बन्धुसन्निधौ । दष्टा सर्पेण दुष्टेना—न्यदा त्वत्तनया निशि ॥३६३॥
जनन्या मातुलैश्चोप—चारास्तत्रैव कारिताः । परं मनाग् गुणो नाभूत् तस्या दुष्कर्मयोगतः ॥३६४॥ यतः—
"जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोअस्स। इअ जाणेविणु धीरा विहुरे वि न कायरा हुन्ति।"
मात्रा स्नेहेन पेटान्तः क्षिप्त्वा पुत्री सरिज्जले । महावृष्टिपयःपूरप्लाविताऽब्धौ समागमत् ॥३६६॥
भवतश्चटिता सेयं त्वत्पुत्रीति विभाव्यताम् । अथ मातृस्वरूप हि कथ्यमानं निशम्यताम् ॥३६७॥
त्वदम्बा सूरकान्तेन क्षिप्ता स्वान्तःपुरे तदा । जिघृक्षुस्त्वत्पिता द्रव्यं लात्वा पल्ल्यां रहो ययौ ॥३६८॥
सोमेन रञ्जितोऽत्यन्तं माह पल्लीपतिस्तदा । विद्यते भवतः कार्यं यत् तदाशु निगद्यताम् ॥३६९॥
सोमोऽवक् सूरकान्तेन गृहिताऽस्ति मम प्रिया । तेनाऽहं वालयिष्यामि गृहिणीं त्वद्बलान्नृप ! ॥३७०॥
दृश्यन्ते बहवो लोकाः स्वकार्यकरणक्षमाः । परकार्यं तु कुर्वन्ति ये ते स्तोका महीतले ॥३७१॥
पल्लीशकटकं लात्वा सोमोऽगात् सूरसिमनि । सूरकान्तो महासैन्यं निरीक्ष्य व्याकुलोऽभवत् ॥३७२॥
समेत्य सम्मुखं सूरकान्तः कुर्वन् युध द्विपा । भग्नसैन्यः स्वयं नंष्ट्वा वप्रमध्ये समीयिवान् ॥३७३॥
तस्थौ सन्नह्य भूपालो यावद्दत्त्वा प्रतोलिकाम् । भङ्क्त्वा तावच्च तां सोमो बलादागात्पुरान्तरे ॥३७४॥
सोमस्य कुर्वतो युद्धं भाले लग्नः शरो दृढम् । तेन श्रेष्ठी क्षणात्प्राणैर्मुक्तो मृत्युं समीयिवान् ॥३७५॥
अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा । भार्यां वालयतस्तस्य स्वस्य प्राणाः स्वयं ययुः ॥३७६॥

॥ २९ ॥

सूरकान्तो रणं कुर्वन् नष्टो भग्नबलः क्वचित् । चकार लुण्टनं पुर्यां भिल्लसैन्यं निरर्गलम् ॥३७७॥ यतः—
"तावच्चन्द्रबलं ततो ग्रहबलं तावद्बलं भूबलं०॥३७८॥
लात्वा सोमश्रियं कश्चिद् भिल्लः सपदि निर्गतः । रात्रौ प्राप्य छलं तस्मात् नष्टं सोमश्रिया क्वचित् ॥३७९॥
भ्रमन्ती विपिने कस्यचित् तरोः फलमाद सा । तत्प्रभावात् तनौ तस्या गौरहस्वे समागते ॥३८०॥ यतः—
"अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति आम्नायाः खलु दुर्लभाः" ॥३८१॥
वनेऽन्यदा तां सुरसुन्दरीश्री-रूपां हि दृष्ट्वा धनसार्थवाहः । रहो गृहीत्वा मुदितो जगाम सुवर्णकूलस्य तटं रयेण ॥३८२॥
यावद् बहूनि वस्तूनि सार्थवाहो गृहीतवान् । समर्घं नगरे तत्र वस्तु तावदजायत ॥३८३॥
द्रव्यं विना कथं वस्तु समर्घं गृह्यतेऽधुना । श्रेष्ठी ध्यात्वेति विक्रेतुं तां निनाय चतुष्पथे ॥३८४॥
वेश्या रूपवती द्रव्य-लक्षेणादाय तां द्रुतम् । नृत्यादि निखिलं सम्यग् शिक्षयामास यत्नतः ॥३८५॥
दृष्ट्वा तां तादृशीं नारी-वपुःकान्तिजितार्जुनाम् । स्वर्णरेखेति नामादात् तस्या नगरनायिका ॥३८६॥
ततो नृत्यं वितन्वन्तीं तां च स्वीयान्तिकेऽन्यदा । महीपतिः स्वयं स्वस्मिन् चक्रे चामरहारिणीम् ॥३८७॥
सेयं जानीहि जननीं निजां श्रीदत्त ! सम्प्रति । लोभेन लज्जया न त्वं प्रादुश्चक्रेऽनया स्त्रिया ॥३८८॥ यतः—
"लोभस्य राजधानीयं ज्ञेयः पण्याङ्गनाजनः । ततः प्रयाणकं कृत्वा विश्वं विश्वं जयत्यसौ ॥३८९॥
मनस्यन्यद् वचस्यन्यत् क्रियायामन्यदेव हि । यासां साधारणस्त्रीणां ताः कथं सुखहेतवे"॥३९०॥

श्रीदत्तोऽवक् कथं वेत्ति वानरोऽयं स्फुटं पशुः । मुनिः प्राह पिता यस्ते सोमो दूरं तदा ययौ ॥३९१॥
मन्दिराहपुरे राण-विद्धः सोमः पिता तव ।सोमश्रीध्यानतो मृत्वा व्यन्तरत्वमुपेयिवान् ॥३९२॥यतः–
"रज्जुग्गह-विसभक्खण जलजलणपवेस-तण्ह-छुहदुहओ। गिरिसिरपडणाउ मुआ सुहभावा हुन्ति वंतरिआ ॥३९३॥
दृष्ट्वा त्वामत्र सोमश्री–मातृपुत्रीसमन्वितम् । ज्ञात्वा ज्ञानात्कपिरूपं कृत्वेदं व्यन्तरो जगौ ॥३९४॥ यतः–
"सखिज्जजोअणा खलु देवाण अद्धसागरे उणे। तेण परमसंखिज्जा जहन्नय पन्नवीसं तु ॥३९५॥
गृहीत्वा व्यन्तरः प्राच्य–मोहादेतां गमिष्यति । इत्युक्ते वानरोऽकस्मात् तामुत्पाट्य क्वचिद् ययौ ॥३९६॥
श्रीदत्तो मुनिमानम्य चित्ते चित्रं दधन् भृशम् । पुरमध्ये समागत्य तस्थौ यावन्निजाश्रये ॥३९७॥
इतो रूपवती प्राह स्वर्णरेखा क्व विद्यते । सख्यः प्रोचुस्ततः स्पष्टं स्वामिनीं प्रति सद्गिरः ॥३९८॥
तुभ्य दास्यामि पञ्चाशद्–दीनारानहमञ्जसा । इत्युक्त्वा तां समादाय श्रीदत्तो विपिने ययौ ॥३९९॥
तयाऽथ प्रेपिताश्चेट्यो गत्वा तस्यान्तिके जगुः । श्रीदत्त! विद्यते स्वर्णरेखा क्व जल्प साम्प्रतम् ॥४००॥
श्रीदत्तोऽवग् न जानेऽहं श्रुत्वेति ता इद जगुः । किं कूटं जल्प प्रत्यक्षं दुष्ट पापिष्ठ साम्प्रतम् ॥४०१॥
ततो रूपवती भूप–पार्श्वे गत्वेति जल्पति । हा प्रभो वसतिग्रामे धूर्तेन मुपिताऽस्म्यहम् ॥४०२॥
केन त्वं मुपितेत्युक्ते भूपेन रूपवत्यवग् । स्वर्णरेखा हृतेदानीं श्रीदत्तेन शठात्मना ॥४०३॥
श्रीदत्तो भूभुजाऽऽकार्य पृष्टस्स ध्यातवानिति । वच्मि कपिकृतं चेद्धि तदा कोऽपि न मन्यते ॥४०४॥

॥ ३१ ॥

मत्वेति कृतमौनं तं श्रीदत्तं गुप्तिसद्मनि । चिक्षिपू रुष्टभूपाला-देशेन दण्डपाशकाः ॥४०५॥
दत्त्वा तद् भाण्डशालायां मुद्रामानीय तत्सुताम् । स्वगृहे भूपतिः शीघ्रं स्थापयामास दुष्टधीः ॥४०६॥

"काके सत्यं द्यूतकारे च सत्यं सर्प्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ॥४०७॥

सत्यं वच्म्यधुनाऽत्रैव यद् भाव्यं तद् भविष्यति । मत्वेति प्राह भूपाग्रे श्रीदत्तः कपिचेष्टितम् ॥४०८॥
श्रीदत्तगदितं श्रुत्वा भूपालादिजनो जगौ । श्रीदत्तेनाधुना सत्यमपूर्वं जल्पितं ननु ॥४०९॥ यतः-
"असंभाव्यं न वक्तव्यं प्रत्यक्षं यदि दृश्यते । यथा वानरगीतानि तथा तु तरिता शिला" ॥४१०॥ तथाहि-
श्रीपुराधीशभीमस्य भूपस्य सचिवोऽन्यदा । दृष्ट्वाऽम्भोधौ शिलामेकां तरन्तीं पुरमागमत् ॥४११॥
शिलातरणवृत्तान्तं श्रुत्वा प्राहेति भूपतिः । असंभाव्यं न वक्तव्यं प्रत्यक्षं यदि दृश्यते ॥४१२॥
समाकर्ण्येति मन्त्रीशो मौनमाधाय तस्थिवान् । इतोऽन्यदा महीशोऽश्वापहृतो दूरमीयिवान् ॥४१३॥
अपूर्वं गीतनृत्यादि कपीनां वीक्ष्य भूपतिः । पश्चादेत्य च पौराणामग्रे जजल्प यावता ॥४१४॥
तावत् कोऽपि जनो नैवा-संभाव्यं मन्यते मनाग् । ततो विलक्षवदनो महीपतिरजायत ॥४१५॥
इतश्चागत्य मन्त्रीशः पश्यन्तीषु प्रजासु च । भूपस्याग्रे जगौ श्लोकं स्वभूपदृष्टगर्भितम् ॥४१६॥
असंभाव्यं न वक्तव्यं प्रत्यक्षं यदि दृश्यते । यथा वानरगीतानि तथा तरति सा शिला ॥४१७॥

इदमेव न किं वेत्सी–त्युक्त्वा भूपोऽरुणेक्षणः । श्रीदत्तं चालयामास शूलारोपकृते तदा ॥४१८॥ यतः–

"शशि–दिवाकरयोर्ग्रहपीडनं ग्रह-भुजङ्ग–विहङ्गमबन्धनम् ।
मतिमता च समीक्ष्य दरिद्रता विधिरहो बलवानिति मे मतिः ॥४१९॥

अतीतं नैव शोचन्ति भविष्य नैव चिन्तयेत् । वर्त्तमानेन कालेन वर्त्तयन्ति विचक्षणाः " ॥४२०॥
इत उद्यानपालास्यात् श्रुत्वा ज्ञानिनमागतम् । वन्दितु भूपतिस्तत्र जगाम सपरिच्छदः ॥४२१॥
प्रणम्य विधिवद् भूपो ययाचे देशनां मुनिम् । तावद् तद्बोधविधये मोवाचेति मुनीश्वरः ॥४२२॥
यस्य न्यायो न धर्म्मो न तत्र का देशना भवेत् । भूपोऽवक् भगवन् न्याय–धर्ममेव करोम्यहम् ॥४२३॥
मुनिश्चन्द्रो जगौ राजन् न न्यायः क्रियते त्वया । श्रीदत्तस्य सदा सत्य–वादिनो मारणं मुधा ॥४२४॥

"सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः ।
दाता दरिद्रः कृपणो धनाढ्यः पश्यन्तु लोकाः कलिचेष्टितानि " ॥४२५॥

विस्मितो नृपतिः प्रेष्य प्रेष्यान् श्रीदत्तमञ्जसा । तत्रानीय निजे पार्श्वे निविवेश कृतादरम् ॥४२६॥
श्रीदत्तस्य कथ सत्य–वादित्वं भवतोदितम् । यावदेव महीपालो मुनिं पप्रच्छ भक्तितः ॥४२७॥
तावता वानरः स्वर्ण–रेखा पृष्ठे वहन् द्रुतम् । तत्रेत्य विधिनाऽनसीत् गुरुं सर्वस्य पश्यतः ॥४२८॥
तामुत्तार्य गुरोः पार्श्वे शुश्रूषुर्देशना कपिः । उपविष्टो महाश्चर्यं कुर्वाणः संसदस्तदा ॥४२९॥ यतः–

॥ ३३ ॥

अनीदृशे वचःकार्ये पशूनां मरुतां नृणाम् । निरीक्ष्य तनुते को न कौतुकं हृदि मानवः ॥४३०॥
श्रीदत्तो देशनान्तेऽवग् भगवन् ! केन कर्मणा । अनुरागः कथं पुत्री–जनन्योर्विषये मम ॥४३१॥
मुनिश्चन्द्रो जगौ पूर्व–भवाज्जातोस्ति निश्चितम् । श्रीदत्तः प्राह कीदृक्षोऽजनि पूर्वभवो मम ॥४३२॥
मुनिः प्रोवाच श्रीदत्त श्रुणु पूर्वभवं निजम् । पाञ्चालविषये चाभूत् काम्पील्यपुरपत्तनम् ॥४३३॥
तत्र द्विजस्य चैत्रस्य गौरी–गङ्गे उभे प्रिये । अभूतां पञ्चबाणस्य रति–प्रीत्याविवाद्भुते ॥४३४॥
सोऽन्यदा मैत्रनामानं मित्रमिति जगौरहः । गम्यतेऽन्यत्र लक्ष्म्यर्थं विषये मित्र ! सम्प्रति ॥४३५॥ यतः–
"सभीताः परदेशस्य बह्वालस्याः प्रमादतः । स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः" ॥४३६॥
यो न निर्गत्य निःशेषा–मवलोकयति मेदिनीम् । अनेकाश्चर्यसम्पूर्णां स नरः कूपदर्दुरः ॥४३७॥
एवं विमृश्य द्रव्यार्थं गत्वा कुङ्कणनीवृति । चैत्र–मैत्रौ रमां बह्वी–मर्जयामासतुः क्रमात् ॥४३८॥
उपार्ज्य द्राविणं भूरि लोभात् मैत्रोऽन्यदाऽध्वनि । सुप्तं चैत्रं रहो हन्तु–मुत्थाय ध्यातवानिति ॥४३९॥
नैवास्ति नरके स्थानं मम विश्वस्ते घातिनः । यतो हि प्राणिनः श्वभ्रे गच्छेयुः पापकारकाः ॥४४०॥ यतः–
"लोभमूलानि पापानि रसमूलाश्च व्याधयः । स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव ॥४४१॥
न च मे पर्वता भारा न च मे सप्त सागराः । कृतघ्नाश्च महाभारा भारा विश्वासघातिनः ॥४४२॥
कूटसाक्षी मृषाभाषी कृतघ्नो दीर्घरोषणः । चत्वारः कर्मचाण्डालाः पञ्चमो जातिसम्भवः ॥४४३॥

|| ३५ ||

विचिन्त्येति निजात्मान निन्दन् मैत्रो भृशं हृदि । उपविष्टः स्वके स्थाने करुणावासिताशयः ॥४४४॥ यतः–
"उत्तमानां मनो गच्छत् कुमार्गात् चलति स्वयम् । दुष्टाना पापिना नृणां नोपदेशशतैरपि ॥४४५॥
३ ततस्तौ भूरिदेशेषु भ्रान्त्वोपार्ज्य धनं बहु । मार्गे नदीप्रवाहान्तः पतितौ मृत्युमीयतुः ॥४४६॥ यतः–
"मज्जत्वम्भसि यातु मेरुशिखर शत्रुं जयत्वाहवे, वाणिज्यं कृषि–सेवनादि सकला विद्याकलाः शिक्षतु ॥४४७॥
आकाशं विपुल प्रयातु खगवत् कृत्वा प्रयत्नं परं, नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥४४८॥
६ छानउं म करिसि रांकडा हुं तूं नीलजवेचि । छन्नुकोडि सतोरणइ रावाणि मूंकी लंक"॥४४९॥
तिर्यग्योनौ तृषादीनि कष्टानि प्राप्य भूरिशः । चैत्रजीवस्ततोऽभूस्त्वं श्रीदत्ताभिधयाऽधुना ॥४५०॥ यतः–
"तिरिआ कस-कुसा-आरानिवाय-वह-बंध-मारणसयाइं । नवि इहइ पाविता परत्थ जइ निअमिआ हुंति" ॥४५१॥
९ भ्रान्त्वा भूरिभवं दुःख–सन्तति प्राप्य सन्ततम् । मैत्रजीवोऽभवत् शङ्खदत्तनामा सुहृत्तव ॥४५२॥
ततश्चैत्रप्रिये गौरी–गङ्गे कालं कियत्तदा । भर्तुर्मार्गं समालोक्या–भूतां भवपराङ्मुखे ॥४५३॥
कुर्वाणे ते स्त्रियौ मासो–पवासादि तपो बहु । दृष्ट्वा गङ्गातटे चार्वीं वेश्यां वीक्ष्य ते दध्यतुः ॥४५४॥
१२ धन्यैषा वृणुते चित्त–चिन्तित नरमन्वहम् । अस्तु धिगावयोर्भर्तुः शुद्धिर्न ज्ञायते कुतः ॥४५५॥
सदेत्थं चिन्तयन्त्यौ ते अनालोच्य स्वकर्म तत् । मृत्वा ज्योतिष्कदेवीषु देवीत्वं प्रापतुः क्रमात् ॥४५६॥ यतः–
"बालतवे पडिबद्धा उक्कडरोसा तवेण गारविआ । वेरेण य पडिबद्धा मरिउं असुरेसु जायन्ति ॥४५७॥

रज्जुग्गह–विसभक्खण–जलजलणपवेस–तण्ह–छुहदुहओ। गिरिसिरपडणाउ मुआ सुहभावा हुंति वंतरिआ ॥४५८॥

तावस जा जोइसीआ चरगपरिव्वाय बंभलोगो जा।

जा सहसारो पंचिंदिअ–तिरिअ जा अच्चुओ सड्ढा" ॥४५९॥–इत्यादि

ततश्च्युते ते क्रमतो गृहिण्यौ गङ्गा च गौरी च वरस्वभावे। श्रीदत्त! ते मातृ–सुते अभूतां मनोहरे पूर्वभवानुरागात् ॥
शंखः* पुनः पूर्वभवार्जितेन वैरेण पानीयनिधावपारे। क्षिप्तस्त्वयोत्पन्नमहाकुधाऽऽशु श्रीदत्त जानीहि निजं कुकर्म ॥
गुरोर्मुखादेतदवेत्य+ जज्ञे एवं हि जीवाः कृतपूर्वकर्म्म-। वशाल्लभन्ते सुख–दुःखयोगं श्रीदत्तवैदेहमनोविरागम् ॥ यतः–
"क्षणं शक्तः क्षणं मुक्तः क्षणं क्रुद्धः क्षणं क्षमी। मोहाद्यैः क्रीडयेवाहं कारितः कपिचापलम् ॥४६३॥
आसन्ने परमपए० ॥
स्वामिन्नपारसंसार–विषमाम्बुधितारणे। उपायं दर्शयेदानीं प्रसद्य मम साम्प्रतम् ॥४६४॥ यतः–
"हुंति परकज्जनिरया निअकज्जपरंमुहा फुडं सुअणा। चन्दो धवलेइ महिं न कलंकं अत्तणो फुंसे" ॥४६५॥
तारणे भवपाथोधे–र्धर्म एव तरीसमः। चारित्रमेव चारित्रतुलां तत्र निभर्त्यलम् ॥४६६॥
दो चेव जिणवरेहिं जाइ–जरा–मरणविप्पमुक्केहिं। लोगम्मि पहा भणिआ सुसमण–सुसावओ वावि ॥४६७॥

*मैत्रः पुनः पूर्वभवार्जितेन कुकर्मणा वारि निधावपारे। क्षिप्तस्त्वयोत्पन्नमहाकुधैव श्रीदत्त०।–इति गपुस्तके ॥
+जज्ञे श्रीदत्तवैदेहमनोविरागम्। एवं हि जीवा कृतकर्मयोगात् सदा लभन्ते शुभभावयोगम् ॥–इति कपुस्तके।

श्रीदत्तोऽवक् प्रभो! कस्मै ददामि तनयामहम् । साधुः प्राह त्वया किं न शङ्खदत्ताय दीयते ॥४६८॥
मुञ्चन्नश्रूणि श्रीदत्तः प्राहेति गद्गदस्वरम् । मम तेनाब्धिक्षिप्तेन मित्रेण सङ्गतिः कथम् ॥४६९॥ यतः–
३ "पुनर्लक्ष्मीः पुनर्भार्या पुनर्माता पुनः पिता । भवान्तरे भवन्त्येव न पुनः साधुसङ्गतिः" ॥४७०॥
मा विषीद क्षणात् मित्र–मेष्यतीति तवानघ । श्रुत्वेति कौतुक यावत् श्रीदत्तस्तनुते हृदि ॥४७१॥
तावद् रक्तेक्षणः शङ्खदत्तस्तत्रेत्य तत्क्षणात् । उपविष्टो मुनिं नत्वा विधिना भूपसन्निधौ ॥४७२॥
६ कषायग्रसितस्वान्तं शङ्खदत्तं समीक्ष्य तम् । मुनिः क्रोधोपशान्त्यर्थं दिदेश देशनामिति ॥४७३॥ यतः–
"कोह पइट्ठो देहधरि तिन्नि विकार करेइ । आपू तावइ पर तवइ पर तह हाणि करेइ ॥४७४॥
अणथोव वणथोवं अग्गीथोवं कसाय थोवं च । नहु भे वीससिअव्वं थेवंपि हु त वहु होइ ॥४७५॥
९ दासत्तं देइ रणं अयरा (इरा) मरणं वणो विसप्पंतो । सव्वस्स दाहमग्गी दिंति कसाया भवमणंतं" ॥४७६॥
शङ्खदत्त ततः शान्तं निवेश्य निजसन्निधौ । मुनिं पप्रच्छ श्रीदत्तः शङ्खदत्तागतिः कुतः ॥४७७॥
मुनिः प्राहाम्बुधेर्मध्ये पतन् मित्र तदा तत्र । फलकं प्राप्य सप्ताहा ययौ सारस्वतं तटम् ॥४७८॥
१२ तत्रैन संवरो नाम मातुलो मिलितस्तटे । आपृच्छय कुशलोदन्तं निनाय निजमन्दिरम् ॥४७९॥
रसवत्यादिनाऽत्यन्त प्रीणितः प्राह नैगमः । हे मातुल ! कियन् मार्गे विद्यते स्वर्णकूलकम् ॥४८०॥
षट्त्रिंशद्योजनेऽस्तीति श्रुत्वा मातुलपार्श्वतः । अयमत्रागतो लातुं वस्तुकन्यादिकं निजम् ॥४८१॥

॥ ३७ ॥

मत्वा वैरं तयोः पूर्वं श्रीदत्त–शङ्खदत्तयोः । प्रोवाचेति मुनिः शङ्ख–दत्तं प्रति हिताशयः ॥४८२॥ यतः–
"कृपाकवचितं चेतो वचः पीयूषपेशलम् । परोपकारव्यापारं वपुः स्यात् सुकृतात्मनाम्" ॥४८३॥
श्रीदत्तोऽयं त्वया पूर्व–भवे हन्तुं समीहितः । श्रीदत्तेनाधुना त्वं च हन्तुं क्षिप्तोऽसि वारिधौ ॥४८४॥
इदानीं भवतो घात–प्रतिघातप्रदानतः । गतं वैरमतः प्रीतिं कुरुतं च युवां ध्रुवम् ॥४८५॥ यतः–
"कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव हि भोक्तव्यं कृतं कर्म शुभाशुभम् ॥४८६॥
"काएण काइअस्स पडिक्कमे वाइअस्स वायाए । मणसा माणसिअस्स सव्वस्स वयाइआरस्स" ४८७॥
भूपः श्रुत्वेति सम्यक्त्व–मूलं श्रीद्वादशव्रतम् । लात्वा (ललौ) सदुत्सवं भावात् साधोस्तस्यान्तिके सदा ॥४८८॥यतः–
"सम्यक्त्वमूलानि पंचा–णुव्रतानि गुणास्त्रयः । शिक्षापदानि चत्वारि व्रतानि गृहमेधिनाम् ॥४८९॥
अंतोमुहुत्तमित्तं पि फासिअं जेहिं हुज्ज सम्मत्तं । तेसिं अवड्ढपुग्गलपरिअट्टो चेव संसारो" ॥४९०॥
उपदेशं गुरोः पार्श्वे आकर्ण्य व्यन्तरस्तदा । पूर्वसंस्तुतिगेहिन्या–मनुरागं मुमोच च ॥४९१॥
श्रीदत्त–शङ्खदत्त–क्ष्मारमण–व्यन्तराः क्रमात् । श्रीदत्ततनया सोमश्रीयुताः क्षमिता व्यधुः ॥४९२॥
वेश्याकर्म विहायाथ स्वर्णरेखा जिनोदितम् । धर्मं कृत्वाऽगमत्स्वर्गे गमिष्यति शिवं पुनः ॥४९३॥
राजाऽपि स्वं सुतं राज्ये निवेश्य लसदुत्सवम् । साधोस्तस्यान्तिके दीक्षां लात्वाऽगाद् मुक्तिमन्दिरम् ॥४९४॥
अन्येऽपि बहवो भव्यलोका धर्मं प्रपेदिरे । व्यन्तरोऽप्यवधीज्जैन–जनविघ्नावलीं सदा ॥४९५॥

श्रीदत्त-शङ्खदत्ताभ्यामादाय धर्ममार्हतम् । नत्वा मुनिं निज स्थान जग्माते रगतम्तदा ॥४९६॥
द्रव्यार्धेन समं पुत्रीं शङ्खदत्ताय सोत्सवम् । दत्त्वा शेषधनं सप्त-क्षेत्र्या श्रीदत्त उप्तवान् ॥४९७॥
लात्वा केवलिनः पार्श्वे दीक्षा संसारतारिणीम् । श्रीदत्तस्तीव्रमातन्वन् तपो विहृतवांस्ततः ॥४९८॥ यतः–
"सुहिओ न चयइ भोए चयइ जहा दुक्खिओत्ति अलियमिण०॥ चिक्कणकम्मालित्तो न इमा इमा परिचयइ० ॥४९९॥
जह चयइ चक्कवट्टी पवित्थरं तत्तिअ मुहुत्तेणं । न चयइ तहा अहन्नो दुब्बुद्धी खप्परं दमओ ॥५००॥
तपोऽग्निना दहन् दुष्ट-कर्माष्टेन्धनसञ्चयम् । श्रीदत्तः क्षपकश्रेणीमारुरोह क्रमात्तदा" ॥५०१॥ यतः–
"अण-मिच्छ-मीस-सम्मं अट्ठ नपुंसित्थि वेअछक्कं च । पुंवेअं च खवेई कोहाईए अ संजलणे ॥५०२॥
गई-आणुपुव्वि दो दो जाई-नाम च जाव चउरिंदी० ॥–इत्यादि आवश्यकगाथा अत्र वाच्याः ।
तमस्तमांसि भिन्दानः शुक्लध्यानोग्ररोचिषा । श्रीदत्तार्योऽनघज्ञान-प्रकाशं प्राप्तवान् क्षणात् ॥५०३॥
सोऽहं विहरमाणो भू-पीठे संजातकेवलः । अत्रागतोऽस्मि भव्यानामुपकारकृतेऽधुना ॥५०४॥
चैत्रम्य मे प्रिये गौरी-गङ्गे पूर्वं बभूवतुः । साम्प्रतं जननी-पुत्र्यौ ते जाते मम कर्मतः ॥५०५॥ यतः–
अज्ञानतो मया मातृ-पुत्र्योरुपरि सम्प्रति । अकारि मानसं रक्त दुष्टकर्मनियोगतः ॥५०६॥ [इति श्रीदत्तकथा]
शुकोऽयम् मे प्रिये हंसी-सारस्यौ ये बभूवतुः । अभूतामत्र ते माता-पितरौ साम्प्रतं मम ॥५०७॥
तात मातरिति कथ-मह वच्म्यधुना तयोः । मोहाच्च केवली चित्र विद्यते भवनाटकम् ॥५०८॥ यतः–

॥ ३९ ॥

"न सा जाई न सा जोणी न तं ठाणं न तं कुलं । न जाया न मुआ जत्थ सव्वे जीवा अणंतसो ॥५०९॥
संसारे भ्रमतां देहभृतामेव निरन्तरम् । मातापित्रादिसम्बन्धा बभूवुर्भूरिशो मिथः" ॥५१०॥
इति न्यायात् स मोक्तव्यो व्यवहारो हि धीमता । निश्चयाद्ध्रियते यस्माद् व्यवहारो वली नयः ॥५११॥ उक्तं च–
"ववहारो वि हु बलवं जं छउमत्थं वि वंदई अरिहा०–इत्यादि ॥५१२॥
संसारं नाटकमायं विज्ञायेति शुकं तदा । मातस्तातेति जल्पन्तं दृष्ट्वा प्राह मृगध्वजः ॥ ५१३ ॥
ते धन्या मानवा युष्मा–दृशाः सन्ति महीतले । येषां स्याद् यौवने चित्तं वैराग्यरसवासितम् ॥ ५१४ ॥
संसारविमुखं चेतः कदा मम भविष्यति । इति भूपोदिते प्राह श्रीदत्तः केवली तदा ॥ ५१५ ॥
यदा सुतश्चन्द्रवतीप्रियाया दृग्गोचरे एष्यति ते नरेन्द्र । वैराग्यरङ्गो रुचिरस्तदानीं भविष्यति श्राक् शिवशर्मणे हि ॥
मुनीश्वरोक्तं नृपतिर्मनोऽन्तो धृत्वा दृढं केवलिनं प्रणम्य । विभावयन् स्वप्नसमं समस्तं पुत्रादियोगं गृहमाजगाम ॥
ततो भव्यजनाम्भोज–बोधाय मुनिपुङ्गवः । विजहार लसज्ज्ञान–दीप्तिर्भास्वानिवावनौ ॥ ५१८ ॥
बभूव दशवर्षीयो यावद् भूपसुतः शुकः । तावत् कमलमालाया द्वितीयोऽभूत् सुतोऽनघः ॥ ५१९ ॥
कृत्वा जन्मोत्सवं भूमि–पतिः स्वप्नानुसारतः । हंसराजाभिधां तस्य सूनोश्चक्रे प्रमोदतः ॥ ५२० ॥
भूपतिर्दशवर्षीय–हंसयुक्तशुकान्वितः । सभायां यावदासीनो द्वास्थस्तावज्जगाविदम् ॥५२१॥
स्वामिंस्त्वां द्रष्टुकामोऽथ समागाद् द्वारि गागलिः । यथादेशोऽधुना च स्या–दत्रायाति तदा यतिः ॥५२२॥

आनीयतामिति प्रोक्ते भूपेन द्वारपालकः । तत्रानयद् ऋषिं शिष्यत्रययुक्त जटाधरम् ॥५२३॥
प्रतिपत्तिं ऋषेः कृत्वा लब्ध्वाशीर्मुनिपुङ्गवम् । उपवेश्यासनेऽप्राक्षीद् भूपो भद्र जिनौकसः ॥५२४॥
ऋषिः प्राहाधुना युष्मत्तुल्याना रक्षतां क्षितिम् । कथ भवति लोकेषु विघ्नान्यत्र मनागपि ॥५२५॥
त्वयि क्षितिं पालयति क्षितीश क्षितिः कथं स्यात् कुशलस्य लोके । धाराधरे वर्षति वारिधारां दुर्भिक्षमाविर्भवति क्वचित्किम्॥
आगतं पितर तत्र श्रुत्वा कमलमालया । तत्रेत्य तातचरणौ नत्वैकत्र स्थितं तदा ॥५२७॥
भूपः प्राहात्र भवतोऽधुना किमर्थमागमः । ऋषिः प्राहागमे हेतुं (तुः) श्रूयतां नृपते ! मम ॥५२८॥
ममाद्य गोमुखो यक्षः स्वप्नेऽभ्येत्य जगाविदम् । चलितोऽह जिनं नन्तुं मुख्यश्रीविमलाचले ॥५२९॥
त्वमागच्छेति यक्षेण प्रोक्तेऽहमित्यवादिषम् । + ॥५३०॥ यतः—
"सीह सउण न चंदबल न वि जोइ धणरिद्धि । एकल्लो लक्खहि भिडइ जिहां साहस तिहां सिद्धि" ॥५३१॥
ततो यक्षप्रभावेणात्रागमं स्तोकवेलया । तेनैकं तनय देहि सद्यो मम मृगध्वज ! ॥५३२॥
राजाऽऽचष्ट लघू पुत्राव्मू मे स्तोऽधुना ननु । तेनोच्यते कथं गन्तुमादेशश्च तयोर्धुवम् ॥ [ स्पष्टं जगाविदम्—पा०
ततो राज्ञा सुतौ पृष्टौ तत्र गन्तु वनान्तरे । प्रणम्यांह्री पितुर्हंसो विनयेन जगाविति ॥ आकर्ण्यैतन्मुनेर्वाक्यं हंस
गाङ्गल्र्विगते गच्छा नन्तुं शत्रुञ्जये जिनम् । ताताहमाश्रम यामि रक्षितुं त्वन्नियोगतः ॥५३५॥ यतः—

+अत्र कश्चित्पाठस्त्रुटितः । "मयोक्तमेतत् कस्तीर्थं रक्षिता सोऽप्युवाच माम् । लोकोत्तरचरित्रौ हि दौहित्रौ हन्त यौ तव भीमार्जुनाविव परौ शुकहंसाभिधाभृतौ ॥ अनयोरानयैकमत्र भाव्यनुपद्रवम् ।" इतिश्राद्धविधेटीकायां शुककथायाम् ।

॥ ४१ ॥

“ते धन्या ये पितुर्मातुर्वाक्यं च शृण्वते मुदा । ते च धन्यतमा लोके गुरूणां च वचो हितम्” ॥५३६॥
श्रुत्वा पुत्रोदितं माता–पितरावुचतुर्मुदा । धन्यस्त्वं तनयो यस्मादीदृशं वचनं वद (तत्र) ॥५३७॥ यतः–
३ “दीपाः स्थितं वस्तु विभासयन्तिं कुलप्रदीपास्तु पुनर्नवीनाः। चिरं व्यतीतानपि पूर्वजान् ये प्रकाशयन्ति स्वगुणप्रकर्षतः”॥
निशम्यैतच्छुकः प्राह तातादेशं ददस्व मे । विमलाचलतीर्थेश–निनंसाऽस्ति पुरा मम ॥५३९॥ यतः–
“आदौ तन्व्यो बृहन्मध्या विस्तारिण्यः पदे पदे । यायिन्यो न निवर्तन्ते सतामाशाः सरित्समाः” ॥५४०॥
६ श्रुत्वा विनयसंयुक्तं पुत्रयोर्वचनं नृपः । ईक्षते मन्त्रिणामास्यं यावत् तावच्च ते जगुः ॥५४१॥
मुनीन्द्रोऽर्थी भवान् दाता रक्षणीयौ जिनाश्रमौ । रक्षिता शुकराजश्चेदनुमन्यामहेतराम् ॥५४२॥
मन्त्रिणां वचनं श्रुत्वा माता–पित्रोः क्रमाम्बुजम् । नत्वा सिंह इवाचालीत् शुको गागलिसंयुतः ॥५४३॥ यतः–
९ “सोनउं चंदन सपुरिसह आपण पीड सहंति । कुलक्कसवट्टइ जाणीइ परउपगार करंति” ॥५४४॥ ततश्च–
गागलिभूपदत्ताशीर्वादः शुकसमन्वितः । लङ्घयन् पृथिवीं स्तोकवेलयाऽगान्निजाश्रमम् ॥५४५॥
नत्वा स्तुत्वाऽऽदिमं देवं तस्थौ तत्राश्रमे शुकः । बबन्ध स्वर्ग–मुक्तिश्रीयोग्यं कर्म शुभं बहु ॥५४६॥
१२ श्रीतीर्थाश्रमयोः सारां कुर्वाणे यत्नतः शुके । चचाल गागलिर्नन्तुं जिनं श्रीविमलाचले ॥५४७॥ यतः–
“श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु च भ्रमणतो न भवे भ्रमन्ति ।
तीर्थेश्वरार्चनकृतो जगदर्चनीयाः, तीर्थव्ययादिह नराः स्थिरसम्पदः स्युः” ॥५४८॥

शशाम वृष्ट्याऽपि विना दवाग्नि–रासीद्विशेषा फलपुष्पवृष्टिः ।
ऊनं न सत्त्वेऽप्यधिको ववाधे शुके वनं गोसरि गाहमाने ॥५४९॥

दूरेऽन्यदा निशीथिन्या श्रुत्वा स्त्रीरुदितं भृशम् । गत्वा तत्राशु पप्रच्छ शुको रोदनकारणम् ॥५५०॥
स्त्री प्राह विद्यते चम्पापुर्यां भूपोऽरिमर्दनः । तस्यासीच्छ्रीमती पत्नी–भवा पद्मावती सुता ॥५५१॥
पद्मावतीमहं धात्री पालयामि रमाऽभिधा । स्तन्यपानादिनाऽपत्यमिव माता निरन्तरम् ॥५५२॥
पद्मावतीं मया युक्तां रागात् कश्चिन्नभश्चरः । विमानस्था विधायाशु चचालाम्बरवर्त्मनि ॥५५३॥
अत्राहं पतिताऽकस्माद्विमानाद् दैवयोगतः । लात्वा पद्मावतीं खेटः क्वाप्यगात्तेन रोदिमि ॥५५४॥ यतः–
"पितृ–मातृ–सुहृत्–पुत्र–गृहिणीनां निरन्तरम् । वियोगो दुस्सहो नृणां जायते नात्र संशयः ॥५५५॥
मधुरैर्वचनैः स्वस्थीकृत्वा तामुटजे क्वचित् । मुक्त्वा ततोऽचलद् द्रष्टुं ययौ पद्मावतीं द्रुतम् ॥५५६॥
प्रासादपृष्ठितश्चैकं क्रन्दन्तं पतितं नरम् । निरीक्ष्येति शुकः प्राह कस्त्वमत्रागतः कुतः ॥५५७॥
वैताढ्याद्रिशिरोरत्नात्पुराद् गगनवल्लभात् । खेटोऽहं वायुवेगाह्वोऽचलं द्रष्टुं महीतलम् ॥५५८॥
चम्पापुरीपतेः पुत्रीमेकां लात्वाऽम्बरे व्रजन् । यावदत्रागमं तावद्विमानं स्खलितं मम ॥५५९॥
पूर्वमेका पपात स्त्री ततो भूमिपतेः सुता । ततोऽहं पतितोऽस्मीह ज्ञायते कारणं नहि ॥५६०॥
शुकः प्राहास्य तीर्थस्य प्रभावात् खेचरेश्वर । विमानात्पतनं जातं तवात्र साम्प्रतं ननु ॥५६१॥

॥ ४३ ॥

ततः शुको जिनं नन्तुं वायुवेगसमन्वितः । गत्वा प्रासादमध्ये प्राग् ववन्दे भव्यभक्तितः ॥५६२॥
प्रेक्ष्य पद्मावतीं तत्र वायुवेगो जगाविदम् । इयमेव मया बाला गृहीताऽस्ति दुरात्मना ॥५६३॥ यतः–
"सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः । मन्त्रौषधिवशः सर्पः खलः केनोपशाम्यते" ॥५६४॥
नत्वा स्तुत्वा जिनं वायुवेगं पद्मावतीयुतम् । शुकः परोपकारार्थी निनायाश्रममञ्जसा ॥५६५॥
धात्री पद्मावतीं प्रेक्ष्य जहर्षेन्दुमिवाम्बुधिः । गौरवं वायुवेगाय रसवत्या शुकोऽकरोत् ॥५६६॥ यतः–
"पानीयस्य रसः शैत्यं परान्नस्यादरो रसः । आनुकूल्यं रसः स्त्रीणां मित्राणां वचनं रसः"॥५६७॥ अत्र सज्जनपद्धतिः ।
शुकः प्राहान्यदा वायु–वेगं विद्याधरं प्रति । वियद्गमनविद्या ते समेति विस्मृताऽथवा ॥५६८॥
व्योमविद्या समायाति परं स्फुरति नो मनाग् । शुकोऽवग् तर्हि मह्यं त्वं तां श्रावय खगेश्वर ॥५६९॥
वियद्विद्यां खगेनोक्तां लात्वा गत्वा जिनालये । देवदृष्टौ तपो–जापपरोऽजनि शुको भृशम् ॥५७०॥
व्योमविद्या शुकेनाशु सिद्धा दत्ता खचारिणे । खेटौ द्वावपि संजातौ परस्परोपकारतः ॥५७१॥ यतः–
"ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥५७२॥
वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि" ॥५७३॥
अत्रान्तरे श्रीविमलाद्रितीर्थे नत्वा जिनेन्द्रं प्रथमं प्रमोदात् । समागतो गागलिरैक्ष्य विद्यां खगां शुकस्याशु मुदं ततान ॥ यतः
परस्य कमलां वर्ध–मानां संवीक्ष्य सज्जनाः । प्रोल्लसन्ति पयोराशीरिव चन्द्रस्य सन्ततम् ॥५७५॥

आपृच्छ्य गागलिमुनिं लघु वायुवेग-स्त्रीयुग्मयुक्तमधिरुह्य लसद्विमानम् ।
क्रामन्नभस्तलमनेकपुराकराद्रिं पश्यन् मृगध्वजसुतः समियाय चम्पाम् ॥५७६॥ यतः-
यस्याशये तिष्ठति जीवरक्षा-मूलो जिनोक्तःप्रवरो हि धर्मः। सुरा-सुरो-र्वीपति-यक्ष-रक्षो-भूतादयस्तस्य वशी भवन्ति॥
अनुज्ञाप्य नृपं तत्र मुक्त्वा पद्मावतीं प्रियाम् । शुकः शाश्वतचैत्यानि वन्दितुं चलितस्ततः ॥५७८॥ यतः-
"पनरस कोडिसयाइं दुचत्तकोडीइवन्न लक्खाइं । छत्तीससहस असीआ तिहुअणबिंबाणि पणमामि" ॥५७९॥
नत्वा शाश्वतचैत्यानि पुरे गगनवल्लभे । शुकराजः सुहृद्युक्तः पश्यन् ग्रामाकरान् ययौ ॥५८०॥
माता-पित्रोः पुरो वायु-वेगः प्राहेति रञ्जतः । उपकारः कृतोऽनेन शुकेनैव महात्मना ॥'५८१॥
वायुवेगपिता वायुवेगां पुत्रीं निजां वराम् । प्रददौ शुकराजाय चारूत्सवपुरस्सरम् ॥५८२॥
वायुवेगां प्रियां तत्र मुक्त्वा मित्रयुतः शुकः । श्रुत्वाऽष्टापदमाहात्म्यं वन्दितुं चलितो जिनान् ॥५८३॥
"चत्तारि अट्ठ दस दोअ वंदिआ जिणवरा चउव्वीसं । परमट्ठनिट्ठिअट्ठा सिद्धा सिद्धिं मम दिसंतु ॥५८४॥
थूभसयभाउआणं चउवीसं चेव जिणघरे कासी । सव्वजिणाणं पडिमा वन्न-पमाणेण नामेणं" ॥५८५॥
शुकराजेति जल्पन्तीं कांचिन्नारीं पुनः पुनः । पृष्ठौ श्रुत्वा शुको मार्गे यावत् पश्चाद्विलोकते ॥५८६॥
तावत्तत्रागमत् काऽपि नारी दिव्यविभूषणा । काऽत्रागास्त्वं शुकेनोक्तं प्रोवाचेति मृगेक्षणा ॥५८७॥
अहं चक्रेश्वरी देवी जिनेन्द्रक्रमसेविका । हन्मि विघ्नानि भूयांसि भव्यानां सन्ततं स्फुटम् ॥५८८॥

॥ ४५ ॥

पुण्डरीकाद्रिसारार्थं गोमुखादेशतोऽधुना । चलन्त्यहमगां क्षोणिप्रतिष्ठस्योपरि स्फुटम् ॥५८९॥
गृहवाद्यन्तरे नारी–रुदितं करुणस्वरम् । श्रुत्वा तत्रेत्य सा पृष्टा मया रोदनकारणम् ॥५९०॥
तयोक्तं मे शुकः पुत्रोऽचालीद्रागलिना समम् । अद्यापि तस्य नो शुद्धिर्जाता तेनैव रोदिमि ॥५९१॥
एवंविधा लसद्भक्ति–युक्ताः पित्रोस्तनूद्भवाः । न लभ्यन्ते विना पुण्यं मानवैः कर्हिचित्कचित् ॥५९२॥ यतः–
"किं जातैर्बहुभिः पुत्रैः शोकसन्तापकारकैः । वरमेकः कुलालम्बी यत्र विश्रमते (श्रूयते) कुलम्" ॥५९३॥
मयोक्तं तव पुत्रस्य विज्ञाय कुशलं द्रुतम् । कथयिष्याम्यहं तुभ्यं वलमाना सती पुनः ॥५९४॥
समाश्वास्येति वचनैर्मातरं तव तत्क्षणात् । अवधिज्ञानतो ज्ञात्वा त्वामत्राहं समागमम् ॥५९५॥
पश्चादेत्य शुकाह्वाय साम्प्रतं निजपत्तने । गत्वा मातुः क्रमौ स्वीय–चरित्रैः प्रीणयोत्तम ॥५९६॥ यतः–
"असार्थप्रार्थनं तीर्थ–मदेहद्रोहणं तपः ।अनम्भःसंभवं स्नानं मातुश्चरणचर्चनम् ॥५९७॥
ऊढो गर्भः प्रसवसमये सोढमत्युग्रशूलं, पथ्याहारैः स्नपनविधिभिः स्तन्यपानप्रयत्नैः ।
विष्ठा–मूत्रप्रभृतिमलिनैः कष्टमासाद्य सद्य–स्त्रातः पुत्रः कथमपि यया स्तूयतां सैव माता ॥५९८॥
आकर्ण्यैतच्छुकः साश्रुः प्राह चक्रेश्वरीं प्रति । अनत्वा तीर्थमासन्नं पश्चाद्यायाम्यहं कथम् ॥५९९॥ यतः–
"अवाप्य धर्मावसरं विवेकी, कुर्याद्विलम्बं न हि विस्तराय । ततो जिनस्तक्षशिलाधिपेन रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥
तायंमि पूइए पूइअं चक्कं पूअणारिहो ताओ । इह लोइअं तु चक्कं परलोअसुहावहो ताओ" ॥६०१॥

ागट् तादृग्विगतं कथानकमत्र गन्यम् ।
इत्यादि भूरिनो गृहीत्वा मृगध्वजात्मजः । विनयेन जगावेवं तदा चक्रेश्वरी प्रति ॥६०२॥
३ शीघ्रं गुरो देवान् नत्वा स्तुत्वा समेष्यति । वक्तव्य च त्वया देवि ! मम मातुः पुरः स्फुटम् ॥६०३॥
गमिन्नेति गुरुः शीघ्रं पित्रपुरतः प्रमोदतः । नन्तुमष्टापदे तीर्थे चलितः श्रीजिनाधिपान् ॥६०४॥
एतत्सन्देशक चक्रेश्वरीमेतत्क दुतं तदा । स्वस्थीचकार कमलमालां मधुरयुक्तिभिः ॥६०५॥
६ नत्वा गुरो जिनान् तापुरेग-प्रमारतीयुतः । क्षितिप्रतिष्ठितोद्याने विमानस्थः समागमत् ॥६०६॥
तस्मिन्नेव दिने पुत्रागमन जननी स्यात् । आकर्ण्य मुदिता पुर्यां चक्रे तु तलिकादिकम् ॥६०७॥
मुहूर्ते शोभने नाग-महोत्सवपुरस्सरम् । माता-पित्रोः पदाम्भोज विनयेनानमन्द्रुकः ॥६०८॥ यतः–
९ "गृहेऽपि नीयते धर्मो यन्तुवर्गः कुलं यशः । पितुः पुत्रास्त एव स्युर्वैरिणः स्वैरिणः परे" ॥६०९॥
किं मार्गेऽपि पुत्रैः शोकसन्तापकारकैः । वरमेकः कुलाम्बी यत्र विश्रमते (श्रूयते) कुलम् ॥६१०॥
जिनौकःस्नात्रस्मरणाद् सुदानप्रदानतः । मृगध्वजसभापालो व्यधात् पुत्रागमोत्सवम् ॥६११॥ यतः–
१२ "देवपूजा गुरूपास्तिः स्वाध्यायः संयमस्तपः । श्रुतं परोपकारश्च मर्त्यजन्मफलाष्टकम् ॥६१२॥
गुरुसंगपुतोऽन्येद्युरुद्याने मेदिनीपतिः । क्रीडां कर्तुं समेत्याशु भक्त्या परिवारयुग् ॥६१३॥
तदाऽकस्मात्परः कोलाहलमाकर्ण्य दूरतः । प्रेषयामास तं ज्ञातुं भृत्यमेकं निजं द्रुतम् ॥६१४॥

॥ ४७ ॥

तज्ज्ञात्वा निखिलं भृत्यः प्रोवाचेति नृपाग्रतः । श्रीसारङ्गपुरे वीराङ्गद आसीन्महीपतिः ॥६१५॥
वीराङ्गदसुतः सूरो हंसेन तव सूनुना । वहन् वैरमियायात्र युद्धार्थी बहुसैन्यकः ॥६१६॥
राज्यं करोम्यहं तर्हि हंसेऽसौ कुरुते कथम् । इति प्राह नृपो यावत्तावत्तत्रागतौ सुतौ ॥६१७॥
सून्वोरग्रे रणं कर्तुं यावद्वार्तां नृपोऽकरोत् । तावच्छत्रुबलादेको भृत्योऽभ्येत्य जगाविदम् ॥६१८॥
पराजितः पूर्वभवे त्वदीय-पुत्रेण हंसेन दृढं हि सूरः। वैरं स्मरन् तत्समुपाजगाम युद्धं विधातुं बहुसैन्ययुक्तः॥६१९॥यतः—
"यस्मिन्दृष्टे मनस्तोषो द्वेषश्च प्रलयं व्रजेत् । स विज्ञेयो मनुष्येण बान्धवः पूर्वजन्मनः" ॥६२०॥
मृगध्वज-शुकौ स्नेहात् पुत्रसोदरयोस्तदा । सज्जीभूतौ प्रति प्राह युद्धे हंस इति स्फुटम् ॥६२१॥
वैरमस्ति मया सार्धं सूरस्यास्य महीपतेः। कुर्वाणं समरं तेन समं मां पश्यताऽधुना ॥६२२॥
इत्युक्त्वा रथमारूढो हंसः कीनाशसोदरः। मुष्टामुष्टि रणं कर्तुं प्रवृत्तः सूरभूभुजा ॥६२३॥ अथ युद्धवर्णनम्—
हंसेन सूरशस्त्राणि भिन्नानि भूरिशस्तदा । मृगध्वजादिभूपेषु पश्यत्सु बहुषु स्फुटम् ॥६२४॥
सूरो हंसं क्रुधा हन्तुमुत्तस्थौ यावता रणे । तावता पातितः सूरो हंसेन पृथिवीतले ॥६२५॥
पुनर्हंसेन तत्रेत्य शीतवातोपचारतः । सूरः सज्जीकृतः सद्यो बान्धवेनेव तत्क्षणात् ॥६३०॥
एवं सज्जीकृतः सूरो हंसेन बहुशो जगौ । दत्तं हंसेन चैतन्यं द्विधा बाह्यान्तरं मम ॥६२७॥
मृत्वाऽहं नरकं गच्छन् रौद्रध्यानेन साम्प्रतम् । रक्षितोऽनेन हंसेन गुरुणा करुणात्मना ॥६२८॥

हसेन साम्प्रतं ज्ञानदृष्टिर्विश्राणिता मम । यत एवमभूत् शुद्धो विवेकः शिवशर्मदः ॥६२९॥ यतः–

"सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य"॥६३०॥

ततः सूरः समुत्थाय मुक्तवैरपरम्परः । भक्तितः क्षमयामास हंसं साधुरिवादरात् ॥६३१॥

दृष्ट्वैतत्कौतुकं सूरं पप्रच्छेति मृगध्वजः । किमर्थं भवताऽऽरब्धं समरं मम सूनुना ॥६३२॥

सूरः प्रोवाच सारङ्ग–पुरोद्यानेऽन्यदा मुनिः । श्रीदत्तकेवली पृथ्वीं पावयन् समुपागमत् ॥६३३॥

मुनिं नन्तुमहं पित्रा सहोद्याने समागमम् । ज्ञानिना विहिता धर्मदेशना शिवशर्मदा ॥६३४॥

"धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्प्रदः किमपरं पुत्रार्थिनां पुत्रदः ।

राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत् किं यन्न ददाति किं च कुरुते स्वर्गापवर्गावपि"॥ अत्र कथा ।

देशनान्ते मया प्रोक्तं किं पुण्यं मे पुराऽभवत् । ततोऽवक् केवली सूरं जिनार्चा विहिता त्वया ॥६३६॥

सूरः प्राह मया कस्मिन् भवे चक्रे जिनार्चना । ज्ञान्याह भद्दिलापुर्यां जितारिरभवन्नृपः ॥६३७॥

यात्रार्थं नृपतिर्हंसी–सारसीसहितो यदा । शङ्खपुरीयसङ्घेन सहाचालीत्प्रमोदतः ॥६३८॥

इत्यादि भूपतेर्देवनत्यादि मरणान्तिकम् । वाच्यं पूर्वोदितं सर्वं चरित्रमथ धीमता ॥६३९॥

ततो जितारिभूपालमन्त्री सिंहाभिधोऽनघः । सर्वलोकयुतोऽचालीत् श्रीभद्दिलपुरीं प्रति ॥६४०॥

अर्धमार्गागतः सिंहः प्राह चरकसेवकम् । नगरस्थानके रत्नकुण्डलं विस्मृतं मम ॥६४१॥

॥ ४९ ॥

आनीय कुण्डलं शीघ्रं मह्यमर्पय सम्प्रति । इत्युक्तो मन्त्रिणा भृत्यस्तदर्थमचलत्तदा ॥६४२॥ यतः—
“सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् । स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम्” ॥६४३॥
तत्रेत्य चरकः शीघ्रमप्राप्तरत्नकुण्डलः । पुनः पश्चात्समागत्य मन्त्रिणोऽग्रे जगाविदम् ॥६४४॥
न लब्धं कुण्डलं मन्त्रीन् ! मया तत्र गवेषता । केनाप्यङ्गीकृतं नूनं भिल्लेन तत्क्षणात्तदा ॥६४५॥
त्वयैवाङ्गीकृतं नूनं कुण्डलं चरकाधम । वदन्नेवं तदा मन्त्री कर्कशं तमताडयत् ॥६४६॥ यतः—
“ सुखस्य दुःखस्य न कोऽपि दाता, परो ददातीति कुबुद्धिरेषा” ०॥६४७॥
तत्र तं मूर्च्छितं मुक्त्वा मन्त्री लोकयुतस्तदा । क्रामन्पृथ्वीं क्रमात् सद्यः समागाद् भद्दिलं पुरम् ॥६४८॥
शीतवातादिना सज्जीभूताङ्गश्चरको द्रुतम् । दध्याविस्थं प्रभुत्वादिगर्विणं मन्त्रिणं हि धिग् ॥६४९॥ यतः—
“चौरा चुल्लुकावि अ बंभण विज्जा य भट्ट पाहुणया । नच्चण--धूत्त—नरिंदा परस्स पीडं न याणंति” ॥६५०॥
रौद्रध्यानपरः सद्यश्चरकस्तृपयार्दितः । मृत्वा सर्पोऽभवद् दुष्टो भद्दिलपुरसन्निधौ ॥६५१॥ यतः—
“आर्ते तिर्यग्गतिस्तथा गतिरधो ध्याने तु रौद्रे सदा, धर्मे देवगतिः शुभं च हिफलंशुक्ले च जन्मक्षयः ।
तस्माद् व्याधिरुगन्तके हितकरे संसारनिस्तारके, ध्याने शुक्लवरे रजःप्रमथने कुर्यात्प्रयत्नं बुधः”॥६५२॥
तेनाहिनाऽऽगतस्तत्र मन्त्री दष्टो रुपाऽद्भुतम् । मृत्वाऽगान्नरके घोरे महादुःखशतप्रदे ॥६५३॥
मृत्वा सरीसृपः सोऽपि रौद्रध्यानपरायणः । तत्रैव नरके दुष्ट—कर्मयोगात्समीयिवान् ॥६५४॥

नरकेऽपि मिथोऽत्यन्तं कुर्वाणौ कलहं सदा । भूरिदुःखभराक्रान्तौ निन्यतुः समयं मुदा (धा) ॥६५५॥ यतः–
"वाला दाढी पक्खी जलयर नरयागया उ अइक्रूरा । हुंति पुणो नरएसुं वाहुल्लेणं न उण नियमो ॥६५६
तह मारण–अभक्खाणदाण–परधणविलोवणाईणं । सव्वजहन्नो उदओ दसगुणिओ इक्कसि कयाणं" ॥६५७॥
श्वभ्रादुद्धृत्य चरक–जीवो लक्ष्मीपुरे वरे । धनश्रेष्ठिसुतो भीमनामाजनि मनोहरः ॥६५८॥
तत्र श्रीजिननाथार्चां विधाय कुसुमैर्वरैः । भवानेवाभवद्वीराङ्गदस्य तनयोऽत्र हि ॥६५९॥ यतः–
"जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोयस्स । इअ जाणेविणु धीरा विहुरे वि न कायरा हुंति" ॥६६०॥
सिंहमन्त्री महादुःखं सहित्वा नरके भृशम् । श्रीविमलाचलासन्न–वने कीरस्ततोऽभवत् ॥६६१॥ यतः–
"नरएसु जाइ अइकक्खडाइं दुक्खाइ परमतिक्खाइं । को वन्नेहि ताइं जीवंतो वासकोडीवि ॥६६२॥
कक्खडदाहं सामली–असिवण–वयराणि–पहरणभयाइहिं । जा जायणाओ पावंति नारया तं अहम्मफलं" ॥६६३॥
कीरस्तीर्थं समालोक्य जातजातिस्मृतिस्तदा । पक्षाभ्यां जलमानीय व्यधात् स्नानं जिनेशितुः ॥६६४॥
वनादानीय पुष्पाणि चारूणि चञ्चुना शुकः । पूजयामास भावेन युगादीशं जिनेश्वरम् ॥६६५॥
एवं शम्भजिनेन्द्रार्चां कृत्वा कीरोऽमरोऽभवत् । मृगध्वजाङ्गजो हंसनामाभूदधुना स च ॥६६६॥
निशम्यैतन्मुनेः पार्श्वे हंसं हत्वा रिपुं निजम् । वालयामीत्यहं वैरं जल्पन् यावत्क्रुधाऽचलम् ॥६६७॥
क्रोधोपशमनोक्तिभिर्निषिध्यमानोऽप्यहं भृशम् । यदा न वलितः मोचे श्रीदत्तेन तदेति हि ॥६६८॥

॥ ५१ ॥

"कोहो माणो माया लोभो हासो रई अरई य। सोगो भयं दुगंछा पच्चक्ख कली इमे सव्वे॥-इत्यादि क्रोधविषयाणि सूक्तानि।
वाली जोइउ नहु वलइं हीइडइ धरइं कसाय। *मेल्ही उटारसा सीँदरो जहिं भावइ तहि जाइ ॥६७०॥–इत्यादि।
३ इत्यादि भूरिशो युक्तीरवमन्याचिरादहम्। आगामत्र रणं कर्तुं समं हंसेन सम्प्रति ॥६७१॥
इदानीं तव पुत्रेण हंसेन बलशालिना। कुर्वता समरं सद्यः पराभूतोऽस्म्यहं ननु ॥६७२॥
तेन वैरमहं मुक्त्वा गत्वा श्रीदत्तसन्निधौ। ग्रहीष्यामि व्रतं सद्यो भवपाथोधितारकम् ॥६७३॥
६ क्षमयित्वा तदा सूरो हंसं सुन्दरभक्तितः। ग्रहीतुं चरणं सद्योऽचालीत् श्रीदत्तसन्निधौ ॥६७४॥ यतः–
"विषयगणः कापुरुषं करोति वशवर्तिनं न सत्पुरुषम्। बध्नाति मशकमेव हि लूतातन्तुर्न मातङ्गम् ॥६७५॥
भवन्ति भूरिभिर्भाग्यैः धर्मकर्ममनोरथाः। फलन्ति यत्पुनस्तेऽपि तत्सुवर्णस्य सौरभम् ॥६७६॥ "आसन्ने परमपए०"॥
९ निरीक्ष्यैतं नृपो दध्याविति चित्ते मृगध्वजः। गृह्णन्ति ये व्रतं मर्त्यास्ते धन्याः स्युर्महीतले ॥६७७॥
"धन्ना जणणी जणया धन्ना वि य बंधवा वि सुकयत्था। पव्वज्जाए जुग्गं पुत्तं परिपालिअं जेहिं" ॥६७८॥
"तावद् भ्रमन्ति संसारे पितरः पिण्डकाङ्क्षिणः। यावत्कुलविशुद्धात्मा यतिः पुत्रो न जायते" ॥६७९॥ इति पुराणे।
१२ ज्ञानिनोक्तं पुरा चन्द्रवतीपुत्रं यदेक्षसे। भविष्यति तदा सम्यग् वैराग्यं तव मानसे ॥६८०॥
अद्य यावन्न दृष्टोऽस्ति चन्द्रवत्याः सुतो मया। जातोऽहं स्थविरस्तेना–न्यथा स्याज्ज्ञानिवाक् कथम् ॥६८१॥

*मेल्ही टारससींदरं–ग पुस्तके

ध्यायन्नेवं महीपालो यावत्तत्र वने स्थितः । तावदेकोऽष्टवर्षीयोऽभ्येत्य बालोऽनमन्नृपम् ॥६८२॥
कस्त्व कुतः समायातो यावदेव नृपो जगौ । तावद् व्योम्नीति वाग् जाता ह्येष चन्द्रवतीसुतः ॥६८३॥
यद्यस्ति भवतश्चित्ते सन्देहस्तत्र भूपते । तदैशानककुप्कोणे व्रज क्रोशेषु पञ्चसु ॥६८४॥
तत्र गिर्योर्द्वयोर्मध्ये संस्थिते कोलिकानने । चकार योगिनी तीव्रं तपो नित्यं यशोमती ॥६८५॥
तत्र गत्वा त्वया शीघ्रमापृच्छय च यशोमतीम् । चन्द्रवतीसुतोत्पत्तिस्वरूप ज्ञास्यते स्फुटम् ॥६८६॥
श्रुत्वैतद् भूपतिस्तेन युक्तः कौतुकिताशयः । चलन् शीघ्रं ययौ तस्मिन् पूर्वोक्ते कदलीवने ॥६८७॥
निरीक्ष्य नृपतिर्ध्यानतत्परां योगिनीं तदा । नत्वा प्राहेति किं चन्द्रवत्या एष सुतो ननु ॥ ६८८ ॥
श्रुत्वाऽऽह योगिनी राजन्! सत्यं चन्द्रवतीसुतः । यतोऽस्ति विषमोऽसारः संसारोऽयं विषादपि ॥६८९॥ यतः–
"कोऽहं कस्त्व कुत आयातः का मे जननी को मे तातः । यत्रेवं दृष्टः संसारः सर्वोऽयं स्वप्नव्यवहारः ॥६९०॥

पुनरपि रजनी पुनरपि दिवसः पुनरपि मासः पुनरपि वर्षम् ।
पुनरपि वृद्धः पुनरपि बालः पुनरपि याति समेति च कालः" ॥ ६९१ ॥

योगिन्याहाभवच्चण्डपुर्यां सोममहीपतिः । प्रवर्तयन् प्रजा न्यायमार्गे शक्र इवानिशम् ॥६९२॥ [चन्द्रवतीसुतोत्पत्तिस्वरूपम्]
निखिलान्तःपुरश्रेष्ठा तस्य भानुमती प्रिया । बभूवेन्दोरिव ब्राह्मी सीतेव रामभूपतेः ॥ ६९३ ॥
हिमवत्क्षेत्रतो युग्ममेकं गत्वाऽऽदिम दिवम् । भानुमत्युदरे सद्योऽवतीर्णं स्वप्नसूचितम् ॥ ६९४ ॥ यतः–

॥ ५३ ॥

"नर–तिरि असंखजीवी सव्वे निअमेण जंति देवेसु । निअआउअसमहीणा–उएसु ईसाणअंतेसु " ॥ ६९५ ॥
सम्पूर्णे समये भानुमती पूरितदोहदा । असूत युगलं पुत्रपुत्रीरूपं मनोरमम् ॥ ६९६ ॥
चन्द्रशेखरनामेति सूनोर्भूमीपतिर्ददौ । पुत्र्याश्चन्द्रवतीत्याह्वा सोत्सवं मुदिताशयः ॥ ६९७ ॥
वर्धमानौ क्रमात्तत्र जातजातिस्मृती मिथः । युग्मधर्मं समीहेते रागाद्धुपसुताङ्गजे ॥ ६९८ ॥ यतः–
"अक्खाण सणी कम्माण मोहणी तह वयाण बंभवयं । गुत्तीण य मणगुत्ती चउरो दुक्खेण जिप्पंति" ॥६९९॥
अत्रान्तरे महीनाथस्तुभ्यं चन्द्रवतीं ददौ । चन्द्रशेखरभूपेन परिणीता यशोमती ॥ ७०० ॥
पुरोद्यानात्ततः छद्म विधाय बहुशो यदा । निनाय त्वां शुकः सद्यो गागलेराश्रमं नृप ! ॥७०१॥
पूर्ववाञ्छितसिद्ध्यर्थं पत्नी चन्द्रावती तदा । त्वद्राज्यस्याग्रहारार्थमानिन्ये चन्द्रशेखरम् ॥७०२॥
अत्रान्तरे समायास्त्वं पश्चात्तत्र महीपते ! । परीप्सितोऽसि तेनैव प्रपञ्चरचनादिना ॥७०३॥ यतः–
"मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं कर्तरीतुल्यं त्रिविधं धूर्तलक्षणम्" ॥७०४॥
अन्येद्युर्भक्तितश्चन्द्र–शेखरः स्मरदैवतम् । आराध्य मार्गयामास रागाचन्द्रवतीं स्वयम् ॥७०५॥
तुष्टेन कामदेवेनादृष्टीकरणकज्जलम् । दत्त्वा तस्मै तदा सद्यः प्रोवाचेति स्फुटाक्षरम् ॥७०६॥
यावन्मृगध्वजश्चन्द्र–वतीपुत्रं न द्रक्ष्यति । तावत्त्वमञ्जनक्षेपा–ददृश्यांगो भविष्यसि ॥७०७॥
चन्द्रवतीसुते दृष्टे मृगध्वजमहीभुजा । पुत्रस्वरूपमुक्त्वाऽहं गमिष्यामि निजालयम् ॥७०८॥

अञ्जनाञ्जितचक्षुस्सो हृष्टोऽदृष्टवपुस्तदा । ययौ चन्द्रवतीपार्श्वे चन्द्रशेखरभूपतिः ॥७०९॥
देवदत्तवरोदन्तं चन्द्रवत्याः पुरस्तदा । चन्द्रशेखर उक्त्वाऽह क्रियते (कुरुतऽ) साम्प्रतं किमु ॥७१०॥
चन्द्रवती जगौ गूढगर्भाया मे भगे सुतः । भावी चेत्किं भगे कार्यं भवताऽत्र निगद्यताम् ॥७११॥
चन्द्रशेखर आचष्ट जातमात्रं सुतं तव । लात्वा रहो यशोमत्यै पत्न्यै दास्याम्यहं किल ॥७१२॥
तत आवां सुखेनैव कामसौख्यैकतत्परौ । स्थास्यावोऽन्तःपुरेऽत्रैव कोऽपि मां नैव पश्यति ॥७१३॥
विचार्येति सुतं चन्द्रवत्या यक्षप्रभावतः । नीत्वा रहो यशोमत्यै दत्त्वा चेति स ऊचिवान् ॥७१४॥
मृगध्वजप्रियाचन्द्रवतीपुत्रो ह्ययं वरः । चन्द्रांकाह्वः सदा पाल्यः पुत्रवत् सुखहेतवे ॥७१५॥
एवं प्रोक्त्वा रहश्चन्द्रशेखरः स्वेष्टसिद्धये । ययौ चन्द्रवतीपार्श्वेऽदृष्टीकरणविद्यया ॥७१६॥
इतो दिने दिने वर्धमानं वीक्ष्य स्फुरद्द्युतिम् । बालं चन्द्राङ्कमालोक्य दध्यावेवं यशोमती ॥७१७॥
कस्मिंश्चिद्दिवसे कान्तमुखं पश्याम्यहं न हि । तेनास्य पालितशिशु–तरोर्गृह्णाम्यहं फलम् ॥७१८॥
ध्यात्वेति साऽऽह चन्द्राङ्कं यदि त्वं मां निरीक्षसे । तदा राज्ययुताऽहं ते भवामि वशवर्तिनी ॥७१९॥ यतः–
"नमो लुब्धकधर्माय तस्मै कुसुमधन्विने । समस्तमपि यस्यैतद् भुवनं मृगयावनम् ॥७२०॥
पुरतोऽपि स्थितं वस्तु नैवान्धो द्रष्टुमीशते । अहो चित्रं यदीक्षन्ते रागान्धाः स्त्रीमयं जगत्" ॥७२१॥
श्रुत्वैतत्प्राह चन्द्राङ्को वज्राहत इवाचिरात् । अनौचित्यं कथं मातरिदानीमुच्यते त्वया ॥७२२॥ यतः–

॥ ५५ ॥

"स्त्रीणामुत्तानवृत्तीनां न मनस्तिष्ठति स्थिरम् । सारिणी वारिणः पश्य प्रत्यवारं परिप्लवः ॥७२३॥
अरक्ता रञ्जयन्त्युच्चै–रस्निग्धाः स्नेहयन्ति च । अमूढा मोहयन्त्येताश्चेतांसि मृगलोचनाः" ॥७२४॥
यशोमती ततः प्राह नाहं ते जननी शिशो । मृगध्वजप्रिया चन्द्रवती माताऽस्ति ते ध्रुवम् ॥७२५॥
अतस्त्वं मे मनः स्वीय–वचसा प्रीणयाधुना । जननी–पुत्रसम्बन्धो यतो नास्त्यावयोर्ध्रुवम् ॥७२६॥
श्रुत्वा तस्या वचो दध्यौ चन्द्राङ्को निजचेतसि । अहो दुष्टाशया नार्य ईदृक्षा विधिना कृताः ॥७२७॥ यतः–
"राजपत्नी गुरोः पत्नी मित्रपत्नी तथैव च । स्वमाता पत्नीमाता च पञ्चेता मातरः स्मृताः"॥७२८॥
विचिन्त्येत्यवलात्कृत्त–मनादृत्य च तद्वचः । चन्द्राङ्कश्चलितो मातापित्रोश्चरणमीक्षितुम् ॥७२९॥
ततो यशोमती भ्रष्टा विषादं दधती हृदि । मुक्त्वा संसारसम्बन्धं समजायत योगिनी ॥७३०॥
साऽहं यशोमती ध्यानसंप्राप्तावधिशेमुषी । जानामि तव भार्यायाः स्वरूपं मेदिनीपते ! ॥७३१॥
यक्षेण खे गिरं मुक्त्वा प्रियावृत्तं विलोकितुम् । प्रेपितोऽस्यधुना मान–क्षीनपार्श्वे मृगध्वज ! ॥७३२॥
भूपस्योत्पन्नक्रोधाग्निशान्त्यै योगिनी तदा । बभाषे शिष्टया वाणी–रीत्या मेघालितुल्यया ॥७३३॥
"पुत्रमित्ता हुइं अनेरा नरह नारि अनेरी, मोहइं मोहिओ मूढ जंपइ मुहिआं मोरी मोरी ।
अतिह गहना अतिह अपारा संसारसायरखारा, बूज्झउ बूज्झउ गोरख बोलइ सारा धम्म विचारा ॥७३४॥
कवण केरा तुरंग हाथी कवण केरी नारी, नरकिं जातां कोइ न राखए हीअडइ जोइ विचारी ॥७३५॥

क्रोध परिहरि मान मनकरि माया लोभ निवारे, अवर वइरि मनि म आणे केवल आपुं तारे" ॥७३६॥–इत्यादि ।
इत्याकर्ण्य नृपः शान्तो भूत्वा नत्वा च योगिनीम् । चन्द्राङ्केन सह स्वीय–पुरोद्यानमुपागमत् ॥७३७॥
आगतान् संमुख मन्त्रिवरान् प्राहेति भूपतिः । भवद्भिः शुकराजाय राज्यं दातव्यमेव हि ॥७३८॥
अत्रस्थोऽहं गुरोः पार्श्वे ग्रहीष्याम्यधुना व्रतम् । पुरमध्ये यतो दोषा लगन्त्येव यतेरपि ॥७३९॥
लास्याम्यत्र स्थितो दीक्षामित्युक्ते मेदिनीभुजा । प्राह मन्त्री वने दोषाः सम्भवन्ति सतामपि ॥७४०॥ यतः–

"वनेऽपि दोषाः प्रभवन्ति रागिणा, गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते, निवृत्तरागस्य गृहं ततो वनम्" ॥७४१॥

समायातं गृहे भूपं चन्द्राङ्कसहितं तदा । दृष्ट्वा रहो द्रुतं चन्द्रशेखरः स्वपुरं ययौ ॥७४२॥
दत्त्वा सदुत्सवं राज्यं शुकराजाय भूपतिः । सप्तक्षेत्र्यां व्ययन् द्रव्यं चकाराष्टाहिकामहः ॥७४३॥
सर्वसंगपरित्याग कृत्वा मातरहं व्रतम् । लास्यामीति क्षितीशस्य ध्यायतो भावना हृदि ॥७४४॥
शुभध्यानाधिरूढस्य क्षिपतः कर्मसञ्चयम् । उत्पन्नं केवलज्ञानं राज्ञो सर्वप्रकाशकम् ॥७४५॥
स्वर्गाद्देवाः समेत्येति जगू राजऋषेः पुरः । वेषं लाहि वयं वन्दामहे त्वत्पादपङ्कजम् ॥७४६॥ यतः–
"मन राजा मन धीर तुं विषमभूअंगम सोइ । रुठु घालइ सातमइ तूठुं लिइ सुरलोइ" ॥७४७॥
भूपेनाङ्गीकृते वेषे देवा नत्वा नरा मुनिम् । वितेनुः केवलज्ञानोत्पत्ति–चारुमहोत्सवम् ॥७४८॥

॥ ५७ ॥

शुक–हंसादयो मन्त्रिवरा आश्चर्यपूरिताः । तत्रेत्य भक्तितो नत्वा चक्रुश्चारुमहोत्सवम् ॥७४९॥
राजर्षिर्भवपाथोधितारणे तरणीनिभाम् । धर्मोपदेशनां कर्तुं प्रवृत्तो मञ्जुभाषया ॥७५०॥
व्याख्यान्ते हंस–चन्द्राङ्कौ युक्तौ कमलमालया । जगृहाते व्रतं सद्यः तस्य राजर्षिसन्निधौ ॥७५१॥ यतः–
"सुहिओ न चयइ भोए चयइ जहा दुक्खिउत्ति अलीयमिणं०॥ जह चयइ चक्कवट्टी पवित्थरं जत्तिअं मुहुत्तेण०" ॥७५२॥
चन्द्रवत्याः स्वरूपं तं जानन्तौ मूलतः स्वयम् । मृगध्वजर्षि–चन्द्राङ्कौ कस्याग्रे न जल्पतः ॥७५४॥
चकार राजर्षिरविर्विहारं भव्याङ्गिराजीवविबोधनार्थम् । शुकः क्षितीशश्च चकार राज्यं प्रवर्तयन्न्यायपथे प्रजौघम् ॥७५५॥
स्नेहं चन्द्रवती चन्द्रशेखरे दधती भृशम् । राज्याधिष्ठायिकां देवीमारराध सुभक्तितः ॥७५६॥
प्रत्यक्षीभूय राज्यश्रीस्तुष्टा प्राहेति तां प्रति । चित्तेप्सितं वरं चन्द्रवति ! प्रार्थय सम्प्रति ॥७५७॥ यतः–
"नोपकारं विना प्रीतिः कथंचित्कस्यचिद्भवेत् । उपयाचितदानेन यतो देवा अपीप्सिताः" ॥७५८॥
प्राह चन्द्रवती सद्यः शुकराज्यं महत्तरम् । सुप्रसन्नाऽधुना चन्द्रशेखराय समर्पय ॥७५९॥
प्रोवाच यक्षिणी क्वापि शुकराजो यदेष्यति । तदाऽऽकार्यो द्रुतं चन्द्रशेखरो राज्यलब्धये ॥७६०॥
शुकदेहनिभं चन्द्रशेखरस्य वपुस्तदा । वर्णरूपादिना सद्यः करिष्येऽहं न संशयम् ॥७६१॥
दत्त्वा वरं गता देवी हृष्टा चन्द्रवती ततः । ईहते शुकराजस्य कुत्रापि गमनं हृदि ॥७६२॥ यतः–
"क्रूरकर्मा जनोऽन्यस्य छिद्राण्यासाद्य वेगतः । हरते सकलां लक्ष्मीं मार्जार इव पायसम्" ॥७६३॥

शाश्वतानर्हतो नन्तु शुकश्चलति यावता । तावत्पद्मावती–वायुवेगपत्न्यौ जजल्पतुः ॥७६४॥
स्वामिन्नावां सहैष्यावो भवतैवाधुना खलु । यतोऽस्माकं भवेत्पुण्यं शाश्वतार्हन्नमस्कृतेः ॥७६५॥
"निक्खमण–नाण–निव्वाण–जम्मभूमीओ वंदइ जिणाणं । न य विसइ साहु विरयंमि देसे वहुगुणे वि" ॥७६६॥
यास्यामीति जिनालयं प्रतिदिनं ध्यायंश्चतुर्थं फलम्, षष्ठं चोत्थित उद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं वहिर्जिनगृहान्प्राप्तस्ततो द्वादशम्, मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवासं फलम् ॥७६७॥
पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः । जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥७६८॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म क्षीयते मार्गे सागरोपमसञ्चितम्" ॥७६९॥
मत्वा मनस्तयोर्भूपः प्राह सचिवान् प्रति । अधुनाऽहं गमिष्यामि तीर्थयात्राकृते ननु ॥७७०॥
कृत्वा यावदहं यात्रामत्रैष्यामि सुमन्त्रिणः । भवद्भिस्तावता राज्यं रक्षणीयं प्रयत्नतः ॥७७१॥
गदित्वेति महीपालः पत्नीद्वययुतः शुकः । व्योम्नि विमानमारुह्याचालीन्नन्तुं जिनेश्वरान् ॥७७२॥
देवतापार्श्वतश्चन्द्रवती प्रोक्त्वा स्वयं रहः । शुकरूपधरं तत्र चन्द्रशेखरमानयत् ॥७७३॥
सत्यरूपधरो देवीप्रभावाच्चन्द्रशेखरः । कुर्वाणो निशि पूत्कारमुच्चैस्थाविति तत्क्षणात् ॥७७४॥
कश्चिद्विद्याधरो याति गृहीत्वा मे प्रियाद्वयम् । तस्य पृष्ठौ द्रुतं भो भो लोका धावत धावत ॥७७५॥
तत्रेत्य मन्त्रिभिः प्रोक्तं कदा यूयं समागताः । भूपः प्राहाधुना यात्रामकृत्वाऽगामहं निशि ॥७७६॥

॥ ५९ ॥

दुष्टो विद्याधरः कश्चिल्लात्वा मम प्रियाद्वयम् । पश्यतो मे गतः कृत्वा छलं पूर्वदिशि द्रुतम् ॥७७७॥
श्रुत्वैतन्मन्त्रिणः प्रोचुर्विद्या क्व स्वामिनो गता । नृपोऽवक् तेन दुष्टेन हृता विद्याऽपि व्योमगा ॥७७८॥
अवोचन्मन्त्रिणो विद्या यातु पत्नीद्वयान्विता । साम्प्रतं भवतो देहे विद्यते कुशलं प्रभो ॥७७९॥
नृपोऽवग् विद्यते देहे कुशलं साम्प्रतं स्फुटम् । प्रिये विना द्रुतं प्राणा यास्यन्ति यममन्दिरे ॥७८०॥ यतः–
"आदौ धर्मधुरा कुटुम्बनिचये क्षीणे च सा धारिणी, विश्वासे च सखी हिते च भगिनी लज्जावशाच्च स्नुषा ।
व्याधौ शोकपरिप्लुते च जननी शय्यास्थिते कामिनी, त्रैलोक्येऽपि न विद्यते भुवि नृणां भार्यासमो बान्धवः"॥अत्रभार्याप्रक्रमः॥
उक्तं च मन्त्रिभिः स्वामिन्! लक्ष्मी–पत्नी–सुतादयः। भवन्ति भूरिशो भूयो जीवितं न कदाचन ॥७८२॥
"माता–पितृसहस्राणि पुत्रदारशतानि च । संसारेऽत्र व्यतीतानि कस्य कोऽयं भवेज्जनः ॥७८३॥
यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने तन्न निशि । निरीक्ष्यते भवेऽस्मिन् ही पदार्थानामनित्यता" ॥७८४॥ इत्यादि ।
इत्युक्ते मन्त्रिभिः मायां कुर्वाणश्चन्द्रशेखरः। कृत्वा प्रत्ययं राजकुलं राज्यं चकार सः ॥७८५॥ यतः-"मुखं पद्मदला०"॥
"नहि मायां विना कश्चित्परस्य हरते धनम् । बको मुञ्चन् शनैः पादौ किं मत्स्यान् ग्रसते नहि ॥७८६॥
विधाय मायां विविधैरुपायैः परस्य ये वञ्चनमाचरन्ति। ते वञ्चयन्ते त्रिदिवापवर्गसुखात्महामोहसखाः स्वमेव ॥७८७॥
शुकरूपधरो देवीप्रभावाच्चन्द्रशेखरः । प्रजाः पाति सदा सत्यशुकवन्निखिलाः किल ॥७८८॥
प्रीतिं कुर्वन् रहश्चन्द्रवत्या सार्धं दुराशयः । मायाया सदनं चन्द्रशेखरोऽभून्महीपतिः ॥७८९॥

इतः शुकोऽर्हतो नित्यान्नमन्नष्टापदे ययौ । ननाम भक्तिभावेन चतुर्विंशतिमर्हतः ॥७९०॥
शुकराजस्ततस्तत्र चारणश्रमणान्तिके । शुश्राव देशनामेवं भवाम्भोधितरीनिभाम् ॥७९१॥ यतः–

"यः प्राप्य दुष्प्रापमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः ।
क्लेशप्रबन्धेन स लब्धमब्धौ चिन्तामणिं पातयति प्रमादात् ॥७९२॥

ते धत्तुरतरु वपन्ति भवने प्रोन्मूल्य कल्पद्रुमं, चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः ।
विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीणन्ति ते रासभं, ये लब्धं परिहृत्य धर्ममधमा धावन्ति भोगाशया" ॥७९३॥
नत्वा देवान् प्रियायुक्तो गत्वा च श्वसुरालये । स्थित्वा त्रीणि दिनान्येव ततोऽचालीच्छुकः सुधीः ॥७९४॥ यतः–
"श्वसुरकुलनिवासः स्वर्गतुल्यो नराणाम्, यदि वसति दिनानि त्रीणि वा पञ्च सप्त ।
अथ कथमपि तिष्ठेन्मृष्टलुब्धो वराको, निपतति खलु पात्रे काञ्जिकं क्षिप्रयुक्तम्" ॥७९५॥
ततः शीघ्रं चलन्मार्गे शुकराजो विमानगः । आगात्स्वीयपुरोद्यानमुदयाद्रिमिवार्यमा ॥७९६॥
वनागतं शुकं वातायनस्थश्चन्द्रशेखरः । दृष्ट्वा भीतः समाकार्य मन्त्रिणोऽग्रे जगाविदम् ॥७९७॥
येन मम प्रिये व्योमगतिविद्यायुते हृते । मदीयं रूपमाधाय स एवागाद् बहिः खगः ॥७९८॥
अनेन चावलावश्यकारिण्या विद्यया खलु । नार्यो वशीकृता अस्य पक्षपातं वितन्वते ॥७९९॥
हत्वा मामधमो राज्यमयं दुष्टो ग्रहीष्यति । ततः पश्चात्परीप्सय्य भवद्भिः प्रेष्यतां द्रुतम् ॥८००॥ यतः–

॥ ६१ ॥

"बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् । बलवद्भिस्तु कर्तव्या शरच्चन्द्रप्रकाशता ॥८०१॥
न तदस्त्रैर्न नगेन्द्रैर्न हयैर्न पदातिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥८०२॥
राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति । तेऽपि सन्मानमात्रेण प्राणैरप्युपकुर्वते ॥८०३॥
अरैः संधार्यते नाभि–र्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥८०४॥
ततो बुद्धिनिधिर्मन्त्री नाम गत्वा बहिर्वने। दृष्ट्वा तं विस्मितः प्राह वाचा मधुरया तदा ॥८०५॥
भो खेट ! भवतः शक्तिर्दृष्टेदानीं मयाऽखिला। पूर्वमस्मत्प्रभोः पत्न्यौ त्वं हृत्वा दूरमीयिवान् ॥८०६॥
अधुनाऽस्मत्प्रभो राज्यं ग्रहीतुमागतोऽसि किम् । परस्त्रीहरणे पापं जायते श्वभ्रदायकम् ॥८०७॥ यतः–
"प्राणसन्देहजननं परमं वैरकारणम् । लोकद्वयविरुद्धं च परस्त्रीगमनं त्यजेद् ॥८०८॥
सर्वस्वहरणं बन्धं शरीरावयवच्छिदम् । मृतश्च नरकं घोरं लभते पारदारिकः" ॥८०९॥–इत्यादि ।
"एकस्यैकं क्षणं दुःखं मार्यमाणस्य जायते । सपुत्र–पौत्रस्य पुनर्यावज्जीवं हृते धने" ॥८१०॥–इत्यादि ।
श्रुत्वैतद्विस्मयं चित्ते तन्वन् प्राह शुकः खगः । दातव्य उपदेशोऽयं भवता स्वस्य स्वामिनः ॥८११॥
अहमेव शुकोऽस्मीति पुरस्यास्य पतिः पुनः । मन्त्री प्राह कथं कूटं जल्प्यते भवताऽधुना ॥८१२॥
मृगध्वजसुतोऽस्तीति पुरमध्येऽधुना ननु । तेन त्वं दूरतो याहि न चेन्मृत्युं च लप्स्यसे ॥८१३॥
बहूक्तेनापि भवता न त्वां कोऽप्यत्र मन्यते । ततः पद्मावती–वायुवेगे एवं जजल्पतुः ॥८१४॥

अयमेतयोः स्वामी मृगध्वजसुतः शुकः । ततः प्रोवाच मन्त्रीशः किं कूट जल्प्यते स्त्रियौ ॥८१५॥ यतः-
"अनृत साहसं माया मूर्खत्वमविवेकिता । अशौच निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥८१६॥
आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसंस्तुतं च ।
प्रायेण भूमिपतयः प्रमदा लताश्च यत्पार्श्वतो भवति तत्परिवेष्टयन्ति ॥८१७॥
अश्वः शस्त्र शास्त्रं वीणा वाद्यं नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च" ॥८१८॥
आकर्ण्येति शुको दध्यौ कृत्वा रूपं ममाधुना । केनाप्यङ्गीकृतं राज्यं ततः किं क्रियते मया ॥८१९॥ यतः-
"तावचन्द्रबल ततो ग्रहबलं तावद्बलं भूबलम्, तावत्सिध्यति वाञ्छितार्थमखिलं तावज्जनः सज्जनः ।
मुद्रामण्डल-मन्त्र-तन्त्रमहिमा तावत्कृतं पौरुषम्, यावत्पुण्यमिदं नृणां विजयते पुण्यक्षयात्क्षीयते ॥८२०॥
आन्ध्य यद् ब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे, नीचैर्जन्मावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वम् ।
निर्वाण नारदेऽपि प्रशमपरिणतिः सा चिलातिसुतेऽपि, इत्थं कर्मात्मवीर्ये स्फुटमिह जयतः स्पर्द्धया तुल्यरूपे ॥८२१॥
अट्ठोत्तरसउ वुद्धडी रावणतणइ कपालि । एक बुद्धी न सांपडी लंका भंजणकालि " ॥८२२॥
यद्येव नृपति हत्वा राज्य लास्याम्यहं बलात् । वदिष्यन्ति तदा लोका एवं विविधभाषया ॥८२३॥
मृगध्वजाङ्गजं हत्वा ललौ राज्यमसौ शठः । यतो लोकापवादो हि बलवानत्र विद्यते ॥८२४॥ यतः-
"चित्ते चित्ते मतिर्भिन्ना कुण्डे कुण्डे नवं पयः । देशे देशे नवाचारा नवा वाणी मुखे मुखे ॥८२५॥

॥ ६३ ॥

उन्मत्तकुम्भि–पञ्चास्य–दुष्टाहि–शुकसारिकाः । बध्यन्ते मुखतो ह्येते लोकानां वदनं नहि" ॥८२६॥
ततो दध्यौ शुकश्चित्ते किं खेदोऽत्र विधीयते । यतोऽस्ति बलवान् कर्म–परिणामः सतामपि ॥८२७॥
राजानः खेचरेन्द्राश्च केशवाश्चक्रवर्तिनः । देवेन्द्रा वीतरागाश्च मुच्यन्ते नैव कर्मणः ॥८२८॥
"हरिणह खुरी दुअंगुली वागडलक्खसवाइ । जं विहि करइ तं हवइ जिहां पासउ तिहां पाय ॥८२९॥
कार्यः सम्पदि नानन्दः पूर्वपुण्यभिदे हि सा । नैवापदि विषादः स्यात् सा हि प्राक्पापपिष्टये ॥८३०॥
ध्यात्वेति मानसे धैर्यमवलम्ब्य शुकस्ततः । व्योम्नि विमानमारुह्य चचाल गृहिणीयुतः ॥८३१॥
हृष्टो मन्त्री समेत्याह चन्द्रशेखरसन्निधौ । नंष्ट्वा कूटशुकः सद्यो ययौ मद्युक्तितः क्वचित् ॥८३२॥
निशम्यैतत् शुकः कूटः तत्क्षणात् हृष्टमानसः । प्रददौ मन्त्रिणे तस्मै ग्रामाणां विंशतिं तदा॥८३३॥ यतः–
"तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसम्पत्त्या खलाः परविपत्तिभिः" ॥८३४॥
ततः शून्यमनाः स्थाने स्थाने भ्राम्यन् शुकोऽम्बरे । पत्नीभ्यां प्रेरितो ह्रीणो नागात् श्वसुरमन्दिरम् ॥८३५॥यतः–
"उत्तमाः स्वगुणैः ख्याता मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याता श्वसुरैश्चाधमाधमाः" ॥८३६॥
अदीनवदनः कर्म–विपाकं चिन्तयन् शुकः । षण्मासान्ते भ्रमन् तत्र ययौ सौराष्ट्रमण्डलम् ॥८३७॥ यतः–
"सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्" ॥
गच्छन् व्योम्न्यन्यदा वीक्ष्य विमानं स्खलितं निजम् । शुको दध्यौ च किं दग्धोपरि मे स्फोटकोऽपतत् ॥८३९॥यतः–

"क्षते प्रहाराः प्रपतन्त्यवश्यं धान्यक्षये स्फूर्जति जाठराग्निः। आपत्सु मित्राणि विसवदन्ति छिद्रेष्वनर्था वहुलीभवन्ति"॥
ततः पश्यन्नधो भूमौ वने शुक इतस्ततः। ज्ञानिनं तातमात्मीय स्वर्णाब्जस्थं ददर्श च ॥८४१॥
सुरासुरमहीपाल सेवितक्रमयामलम्। विमानात् शुक उत्तीर्य ननाम विधिपूर्वकम् ॥८४२॥ उपदेशोऽत्र-
"धम्मो मंगलमउलं उसहमउलं च सव्वदुक्खाणं। धम्मो वलं च विउलं धम्मो ताणं च सरणं च" ॥८४३॥
माया-मान-मद-क्रोध-परदोषादिवर्जनम्। धर्म एवोच्यते स्वर्गापवर्गदो जिनेश्वरैः ॥८४४॥ यतः-
प्राणात्ययेऽपि सम्पन्ने उत्तमा मानवाः खलु। परदोषं न गृह्णन्ति कुर्युर्जीववधं न च" ॥८५५॥
देशनान्ते शुकः साश्रुनेत्रः प्राहेति गद्गदम्। मत्तुल्यरूपमाधाय राज्यं कश्चिन्नरो ललौ ॥८४६॥
मुनिश्चन्द्रवती-चन्द्रशेखरयोर्विचेष्टितम्। जानन्नपि जगौ नैवानर्थदण्डस्य हेतुतः ॥८४७॥ यतः-
"शरीराद्यर्थदण्डस्य प्रतिपक्षतया स्थितः। यो ह्यर्थदण्डतस्त्यागस्तृतीयं तु गुणव्रतम् ॥८४८॥ इत्यादि योगशास्त्रगताः॥
"जोइस-निमित्त-अक्खर-कोऊअ-आएस-भूइकम्मेहिं। करणाणुमोअणेहिं साहुस्स तवक्खओ होइ" ॥८४९॥
शुकः प्राह प्रभो वर्ये जाते त्वद्दर्शने सति। राज्य मे याति यद्येवमभाग्यं विद्यते तदा ॥८५०॥ यतः-
"पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किम्, नोलूको हि विलोकते यदि तदा सूर्यस्य किं दूषणम्।
वर्षा नैव पतन्ति चातकमुखे मेघस्य किं दूषणम्, यत्पूर्वं विधिना ललाटफलकेऽलेखि प्रमाणं हि तत्"॥८५१॥
इत्याद्यभ्यर्थितः प्राह मृगध्वजो मुनिस्तदा। विमलाद्रिं महातीर्थं विद्यते शिवशर्मदम् ॥८५२॥ यतः-

॥ ६५ ॥

"विमलाद्रिसमं तीर्थं सर्वपापविनाशकम् । गजेन्द्रपदजं नीरं निर्द्वन्द्वं भुवनत्रये ॥८५३॥ इत्यादि ।
अस्य तीर्थगुहामध्ये षण्मासान् यदि सन्ततम् । स्मर्यते भवता पञ्चपरमेष्ठी तु मन्त्रराट् ॥८५४॥
यदा चैव गुहामध्ये महत्तेजः स्फुरिष्यति । तदा शत्रुः स्वयं याति विना युद्धं निजौकसि ॥८५५॥ यतः-
"अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति आम्नायाः खलु दुर्लभाः" ॥८५६॥
नत्वा मुनिं शुको हृष्टो विमानमधिरुह्य च । मन्त्रं साधयितुं सद्यो जगाम विमलाचलम् ॥८५७॥
गुरूक्तविधिना मन्त्रं ध्यायता शुकभूभुजा । षण्मासातिक्रमे तेजः स्फुरद् दृष्टं गुहान्तरे ॥८५८॥ यतः-
"पुव्वभवसूरविरई नाणासायणपभावदुम्मेहो । निअनामं झायंतो मासतुसो केवली जाओ" ॥८५९॥
ततो विमानमारूढः शुकः पत्नीद्वयान्वितः । चचाल यावताऽसौ च पुरं प्रति प्रमोदितः ॥८६०॥
इतः कूटशुकं प्राह राज्याधिष्ठायिका सुरी । शुकरूपं गतं चान्द्रशेखरं ते समागतम् ॥८६१॥
आकर्ण्यैतद् रहश्चन्द्रशेखरः सभयस्ततः । निर्गत्य नगराद्यावद्वने तस्थौ क्वचित् शुकः ॥८६२॥
तावद्विमानमारूढः पत्नीद्वययुतः शुकः । तत्रागत्य निजं राज्यमलंचक्रे स बुद्धिमान् ॥८६३॥
सर्वैरपि तदा मन्त्रीश्वरैः सन्मानितः शुकः । पृष्टो राजाऽऽगमोदन्तं जगाद निखिलं तदा ॥८६४॥
शुकराजस्ततोऽनेकविद्याधरसमन्वितः । अचालीद् ऋषभं नन्तुं सङ्घेशो विमलाचले ॥८६५॥
स्नात्रपूजा-ध्वजारोपादीनि कार्याण्यनेकशः । कृत्वा सङ्घपतिः प्राह मन्त्रीशानिति मोदतः ॥८६६॥

ममात्रैवाभवच्छत्रुजयः सन्मन्त्रजापतः। तेनास्यैव गिरेः शत्रुञ्जयेत्याह्वा निगद्यताम् ॥८६७॥
इतस्तत्रागतश्चन्द्रशेखरः पृथिवीपतिः। नत्वाऽभ्यर्च्य युगादीशं दध्यावेवं निजे हृदि ॥८६८॥
मया च यान्यकार्याणि कृतानि सन्ति भूरिशः। तैरेव दुर्गतौ पातो भविष्यति ननु द्रुतम् ॥८६९॥
ध्यात्वेति मनसि प्राप्तवैराग्यश्चन्द्रशेखरः। महोदयमुनेः पार्श्वे दीक्षां जग्राह भावतः ॥८७०॥ "जह चयइ चक्कवट्टी"०।
तदा महोदयज्ञानिपार्श्वेऽभ्येत्य शुको नृपः। धर्मं जीवदयामूलं शुश्राव भक्तिपूर्वकम् ॥८७१॥
देशनान्ते शुकः क्ष्मापः पप्रच्छेति यतीश्वरम्। राज्यं केन छलं कृत्वा गृहीतं पूर्वमंजसा ॥८७२॥
महोदयमुनिः प्राह शुकराजाधुना शृणु। इतो भवाद् द्विपञ्चाशत्तमे भूपभवे त्वया ॥८७३॥
उद्दाल्य छलतो राज्यं गृहीतं यस्य वेगतः। तेन तेऽस्मिन् भवे राज्यं जगृहे शुकभूपते ॥८७४॥
शुकराजो जगौ कस्य राज्यं पूर्वं लले मया। यतीश्वरो जगौ वत्स चन्द्रशेखरभूपतेः ॥८७५॥ यतः–"कृतकर्मक्षयो"०॥
शुकराजस्ततः शीघ्रमुत्थाय विस्मिताशयः। क्षमयामास भावेन चन्द्रशेखरसंयतम् ॥८७६॥
तदा तथाऽऽत्मनः कर्म कृतं निन्दन् मुहुर्मुहुः। क्षीणकर्माष्टकश्चन्द्रशेखरः प्राप केवलम् ॥८७७॥ यतः–
"गो-वभ-गब्भ-गब्भिणि-भूणघायाइं गुरूअपावाइं। काऊण वि कणयं पिव तवेण सिद्धो दढपहारी"॥८७८॥
विधाय सोत्सवं यात्रां तीर्थे शत्रुञ्जयाभिधे। शुकराजश्चलन्मार्गे स्वपुरीं समुपाययौ ॥८७९॥
आद्या सुप्ताऽन्यदा राज्ञी प्रविशन्तं निशाकरम्। मुखे वीक्ष्य जजागार मुदिताभूच्च चेतसि ॥८८०॥

॥ ६७ ॥

यो योऽभूद् दोहदस्तस्या दानशीलादिकोऽनघः । स स भूमीभुजा पूर्णीचक्रे मुदितचेतसा ॥८८१॥
सम्पूर्णे समये चारुदिवसे सुन्दरक्षणे । साऽसूत तनयं भानुं पूर्वेव प्रसरत्प्रभम् ॥८८२॥
सन्मान्य स्वजनानन्नपानवस्त्रादिभिस्तदा । कृत्वा जन्मोत्सवं चन्द्र इत्याह्वां भूपतिर्ददौ ॥८८३॥
वर्धमानः क्रमात्पित्राऽपाठि पण्डितसन्निधौ । सूरभूपाङ्गजां लक्ष्मीं चन्द्रश्च परिणायितः ॥८८४॥
अन्येद्युः कमलाचार्या विहरन्तोऽवनीतले । आययुस्तत्पुरोद्याने भूरिसाधुसमन्विताः ॥८८५॥
श्रुत्वाऽऽगतान् गुरून् धर्मं श्रोतुं शुकमहिपतिः । पत्नीपुत्रान्वितो गत्वा नत्वा चोपाविशत्पुरः ॥८८६॥ तथाहि–
"सामग्गिअभावाओ ववहारिअरासिअप्पवेसाओ । भव्वा वि ते अणंता जे मुत्तिसुहं न पाविंति" ॥८८७॥
उपक्रमं विना कर्मयोगादपि तनूभुजः । धीरनैगमवन्नैव लभन्ते सातसन्ततिम् ॥८८८॥ [धीरनैगमकथा]
आसीद्विश्वपुरे धीरो वणिग् दारिद्र्यपीडितः । प्रिया धीरमतीनाम्नी पुत्रो धरणसंज्ञकः ॥८८९॥
आनीय काननादेधस्तृणकाष्ठादिसन्ततम् । विक्रीणन्तो नयन्ते ते समयं कष्टतस्त्रयः ॥८९०॥ यतः–
"दौस्थ्यं नाम पराभूतेः स्थानमात्रं न संशयः । राजाऽपि गोपतेः पादान् क्षीणः संसेवते चिरम् ॥८९१॥
सहोदयव्ययाः पञ्च दारिद्र्यस्यानुजीविनः । ऋणं दौर्भाग्यमालस्यं बुभुक्षाऽपत्यसन्ततिः ॥८९२॥
जीवन्तो मृतकाः पञ्च श्रूयन्ते किल भारते । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥८९३॥
विवदन्ते मिथः कर्मोपक्रमाविति सन्ततम् । अहं सर्वजगज्जन्तोर्ददामि सुखसन्ततिम् ॥८९४॥

उपक्रमो जगौ सातततिर्मत्तो भवेन्नृणाम् । कर्म प्राह त्वया किं स्यान्मां विना वाञ्छितप्रदम् ॥८९५॥
त्वं चापि मत्प्रसादेन प्रतिष्ठां प्रगमिष्यसि । सेवते मां जगत्सर्वं भृत्यवन्मेदिनीपतिम् ॥८९६॥
मां विना चेद्ददासि त्वं वाञ्छितं देहिनामिह । तदाऽस्य धीरनिःस्वस्य विश्राणय समीहितम् ॥८९७॥
तत उपक्रमो हारं लक्षमूल्यं मनोहरम् । आनीयाशु ददौ तस्मै धीराय काननान्तरे ॥८९८॥
हृष्टो गच्छन् गृहं काष्टभारस्योपरि धीरकः । मुक्त्वा हारं पयः पातुं ययौ मध्येसरोवरम् ॥८९९॥
इतोऽकस्माच्छकुनिका मांसस्य भ्रान्तितस्तदा । दृष्ट्वा हारं वने दूरं मुमोच तरुकोटरे ॥९००॥
तेन द्वित्रिचतुर्वारं हारो विश्राणितस्तदा । मुक्तस्तत्र वने हृत्वा शकुन्या दैवयोगतः ॥९०१॥ यतः—
"किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः । प्रायेण हि मनुष्याणां बुद्धिः कर्मानुसारिणी" ॥९०२॥
ततश्चोपक्रमस्तस्य मध्येगेहं निधिं द्रुतम् । मुमोच यावता तावद् दृष्टस्तेन तदा क्षणात् ॥९०३॥
सोऽपि श्रेष्ठी प्रयत्नेन सुस्थाने तं निधिं व्यधात् । इतोऽकस्मात्समागत्य चौरेण च हृतो निशि ॥९०४॥
एवमुपक्रमस्तस्य धीरस्य भूरिशस्तदा । विधायोपकृतिं खिन्नो मिलितः कर्मणः पुनः ॥९०५॥
कर्म प्रोवाच नाद्यापि धीरोऽयं नैगमस्त्वया । महेभ्यो विहितस्तेन पश्य सम्प्रति मत्कृतम् ॥९०६॥
कर्मणा प्रददे यद्यद् धीराय काञ्चनादिकम् । उपक्रमं विना तत्तत्काकनाशं गतं क्षणात् ॥९०७॥
विज्ञाय चिन्तितं चित्ते गर्वं करोम्यहं मुधा । उपक्रमं विना किंचिद्दातुं न शक्यते मया ॥९०८॥

॥ ६९ ॥

एकीभूय ततः कर्मोपक्रमौ धीरनैगमम् । ग्राहयामासतुर्हारं लक्षमूल्यं मनोहरम् ॥९०९॥

ततो भूरिधनो धीरः कर्मोपक्रमयोगतः कृत्वा धर्मं शुभध्यानपरोऽन्ते त्रिदिवं ययौ ॥९१०॥ यतः–

"सुख–दुःखानां कर्ता हर्ता च न कोऽपि कस्यचिज्जन्तोः । इति चिन्तय सद्बुद्ध्या पुरा कृतं भुज्यते कर्म" ॥

इति भाग्यकर्मस्थितिविषये धीरकथानकम् ।

श्रुत्वा केचिज्जनाः किञ्चिद्वचो वर्यं सुखप्रदम् । अवलेपं त्यजन्तीह वणिक्पुत्र इवाचिरात् ॥९१२॥

श्रीपुरे धनदः श्रेष्ठी भार्या धनवती प्रिया । पुत्रो लक्ष्मीधरो नाम्ना रूप–लावण्यसुन्दरः ॥९१३॥ [वणिक्पुत्रकथा]

जलस्थलपथे तस्य वणिक्पुत्राश्च भूरिशः । लक्ष्मीमर्जयितुं यान्ति चतुर्षु दिक्षु सन्ततम् ॥९१४॥

पाठितः पण्डितोपान्ते पित्रा लक्ष्मीधरः सुतः । विनीतः सन्ततं देवगुरूणां सेवनं व्यधात् ॥९१५॥ यतः–

"किं जातैर्बहुभिः पुत्रैः शोकसन्तापकारकैः । वरमेकः कुलालम्बी यत्र विश्रमते कुलम् ॥९१६॥

एकेन वनवृक्षेण पुष्पितेन सुगन्धिना । आमोदितं वनं सर्वं सुपुत्रेण कुलं यथा" ॥९१७॥

शनैः शनैः रमा कर्मयोगात्क्षयमुपाययौ । तस्य चन्द्रो वणिक्पुत्रो लक्ष्मीवानजनि क्रमात् ॥९१८॥ यतः–

"कुमुदवनमपश्रि श्रीमदम्भोजखण्डं, त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं, हतविधिललितानां ह्री विचित्रो विपाकः" ॥९१९॥

चन्द्रेण तनयो भीमनामा लक्ष्मीपुरेऽन्यदा । धीरश्रेष्ठिसुतां चङ्गवतीं च परिणायितः ॥९२०॥

दीपालीपर्वणः पूर्वं भीमं धीरवणिग् वरम् । आकारयितुमप्रैपीत् दीपालीहेलयाऽन्यदा ॥९२१॥
भूषणानि परिधाय सदृक्चतुःकुमारयुग् । चलन् श्रेष्ठिसुतं लक्ष्मीधरमाह्वातुमीयिवान् ॥९२२॥
तादृग्वेषविभूषाद्यभावाल्लक्ष्मीधरस्तदा । तेन सार्धं तदा गन्तुं वणिक्पुत्रेण नेहते ॥९२३॥
बलात्पित्रा समं तेन लक्ष्मीधरश्च चालितः । ततो वणिक्सुतः श्वश्रूगेहे हृष्टमना ययौ ॥९२४॥
सदन्न–पान–पक्वान्नदानभक्ति पुरस्सरम् । तत्र गौरवितः श्वश्र्वा जामाता सखिसंयुतः ॥९२५॥
श्रेष्ठिसूनोः सदादेश यत्तद्दत्ते वणिक्सुतः । प्रेषितोऽम्भोऽन्यदाऽऽनेतुं तेन श्रेष्ठितनूरुहः ॥९२६॥
यावच्चलति तावच्च तस्य पृष्ठौ पटे तदा । छिद्रं वीक्ष्य वणिक्पुत्रो जहासान्यसुहृद्युतः ॥९२७॥
श्रुत्वैतद्वचन पश्चाद्वलित्वा श्रेष्ठिनन्दनः । अन्योक्तिगर्भितां वाचं जगौ वणिक्सुतं प्रति ॥९२८॥

"आपद्गत हससि किं द्रविणान्धमूढ लक्ष्मीः स्थिरा भवति नैव कदापि कस्य ।
यत्किं न पश्यसि घटीर्जलयन्त्रचक्रे रिक्ता भवन्ति भरिताः पुनरेव रिक्ताः" ॥९२९॥

श्रेष्ठिसूनोर्वचः श्रुत्वोत्तीर्णगर्वो वणिक्सुतः । क्षमयामास सन्मान्य वस्त्राभरणदानतः ॥९३०॥
ततो वणिक्सुतः श्रेष्ठिसुत लक्ष्मीप्रदानतः । सस्व चकार विधिवत्सन्तत विनयान्वितः ॥९३१॥
अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥९३२॥
एवमन्योक्तमाकर्ण्य केचनोच्चमानवाः । मार्गमायान्ति सहसा वणिक्पुत्र इवाचिरात् ॥९३३॥

॥ ७१ ॥

इति गर्वोत्तारविषये वणिक्पुत्रकथानकम् ।

धर्मप्रभावतश्चित्तचिन्तितां सातसन्तन्तिम् । अरिमर्दनभूपाल इवाप्नोति जनोऽचिरात् ॥९३४॥ [अरिमर्दनकथा]

इहैव भरतक्षेत्रेऽभवत्स्वर्णपुरं पुरम् । अभ्रंलिहजिनागारसौधश्रेणिविराजितम् ॥९३५॥

तत्रारिमर्दनक्षोणिपतेः सन्न्यायशालिनः । लक्ष्मीवती प्रिया शीलगुणरत्नावलीखनिः ॥९३६॥

मतिसाराभिधो मन्त्री वृद्धो नीतिविचक्षणः । भूपस्य मानसं शश्वत् रञ्जयामास सत्तमः ॥९३७॥ यतः–

"अलंकरोति हि जरा राजा–मात्य–भिषग्–यतीन् । विडम्बयति पण्यस्त्री–मल्ल–गायन–सेवकान् ॥९३८॥

सद्विमानवनावासदीर्घिकादिविराजितम् । स्वर्गं भूपोऽन्यदा सुप्तो दृष्ट्वा जागरितो निशि ॥९३९॥

ममेदृक्षं पुरं नैव यदि स्यात्स्वर्गसंनिभम् । तदा मे जीवितं सर्वं निष्फलं समजायत ॥९४०॥

प्रातः श्यामाननं भूपं निरीक्ष्य मन्त्रिराड् जगौ । स्वामिंस्तव क्वचिच्चिन्ता विद्यते वद साम्प्रतम् ॥९४१॥

राजाऽवक् कथितुं नैव शक्यते साम्प्रतं मनाग् । मन्त्री प्राहाधुना स्वामिन् दुःसाधमपि कथ्यताम् ॥९४२॥

राज्ञा प्राह मया स्वप्ने दृष्टोऽत्र त्रिदशालयः । तेन स्वर्गोपमं द्रव्यव्ययात्कारय मत्पुरम् ॥९४३॥

ततोऽर्काश्म–शशाङ्काश्म–स्फटिकाश्म–मणीचयैः । मन्त्री सर्वाणि गेहानि कारयामास सर्वतः ॥९४४॥ यतः–

"ते धन्या मन्त्रिणः शिष्याः सेवकास्तनयाः प्रियाः । भूपादीनां वचः प्रोक्तं ये कुर्वन्ति स्म हर्षिताः ॥९४५॥

महीशसप्तभूसद्मपुरतस्तोरणं वरम् । कारयामास रैकुम्भमयूरोद्भासि मन्त्रिराट् ॥ ९४६ ॥

पशुः पुण्यं घन गोष्ठी भोग–धर्म–जिनालयाः । क्रमशो भूमयः सप्त सप्तभूमिनिकेतने ॥९४७॥
गवाक्षस्थः पुरीशोभा पश्यन् भूपो जगावदः । प्रिये ईदृक् पुरं नास्ति क्वापि भूमितले वरम् ॥९४८॥ यतः–
"स्वचित्तकल्पितो गर्वः कस्य नाम न विद्यते । उत्क्षिप्य टिट्टिभः पादौ शेते भङ्गभयाद्दिवः ॥९४९॥
श्रुत्वैतत्तोरणारूढा शुकी प्राह शुकं प्रति । ईदृक् क्वापि पुरं रम्यं मह्या दृष्टं त्वया शुक ॥९५०॥
शुकः प्राह प्रिये साररत्नसौधसमन्वितम् । रत्नकेतुपुरं स्वर्गिपुरस्पर्द्धित्रि विद्यते ॥९५१॥
तत्रासीद्रत्नचन्द्राह्वो भूपो रत्नवती प्रिया । लक्ष्मीवती सुता चारुरूपसौभाग्यसुन्दरी ॥९५२॥
एतच्चतुष्टयस्याग्रेऽत्रत्यदङ्ग–नृपादयः । अङ्गारकतुला स्वर्णस्येवाग्रे दधतेतराम् ॥९५३॥ यतः–
"वारि–वृक्ष–मही–प्रस्थ–काष्ठ–वस्त्रा–वला–नृणाम् । पुरा–चलविशेषाणामन्तरं विद्यते महत्" ॥९५४॥
तेनायं नृपतिर्गर्वं मुधा धत्ते पुरेक्षणात् । उत्तमानां न युज्येत कर्तुं गर्वं क्वचिन्मनाग् ॥९५५॥ यतः–
"जाति–लाभ–कुलै–श्वर्य–बल–रूप–तपः–श्रुतैः । कुर्वन् मदं पुनस्तानि हीनानि लभते पुमान्" ॥९५६॥
श्रुत्वैतन्नृपतिः कीरपार्श्वे यावद् व्रजेत्ततः । तावत्तन्मिथुनं दृष्टिगोचरात्प्रययौ क्वचित् ॥९५७॥
दध्यौ भूपः पुरं द्रव्यव्ययेन कारितं मया । एवमुक्त्वा कथं कीरयुग्ममुड्डीय जग्मिवान् ॥९५८॥
एवं पुनः पुनश्चित्ते चिन्तयन्नृपतिर्भृशम् । श्यामास्यो मन्त्रिणा पृष्टोऽशेषं दुःखं निजं जगौ ॥९५९॥
रत्नकेतुपुरं द्रष्टुं रत्नचन्द्रं च भूपतिम् । सर्वासु दिक्षु भूमीशः प्रेषयामास सेवकान् ॥९६०॥

॥ ७३ ॥

भ्रान्त्वा ककुप्सु सर्वास्वलब्धतत्पुरवार्त्तिकाः । श्यामास्याः सेवका भूपपार्श्वेऽभ्येत्य जगुः शनैः ॥९६१॥
पुरनामादि न ज्ञातमस्माभिर्वसुधातले । ततोऽवग् भूपतिर्मन्त्रिन् ! मृत्युर्मेऽत्र समागमत् ॥९६२॥
ज्ञास्यते सा पुरी चेन्न तदाऽग्निः शरणं मम । मन्त्री प्राह कियत्कालं प्रतीक्षस्व नरेश्वर ! ॥९६३॥
भ्रान्त्वा सर्वत्र षण्मासमध्ये चेत् तत्पुरस्य च । आनयिष्यामि नो शुद्धिं मर्तव्यं भवता तदा ॥९६४॥
भूपोऽवग् नैव शक्नोमि स्थातुं सम्प्रति मन्त्रिणः । मन्त्रीश्वरा जगुः कार्यं शोभते त्वरितं न हि ॥९६५॥ यतः–
"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः" ॥९६६॥
एवमुक्ते यदा भूपो न मुञ्चति कदाग्रहं । तदाऽवग् मन्त्रिराट् राजन् ! सन्नराः कथयन्ति यत् ॥९६७॥
तत्सर्वं सुखकृन्नूनं जायते देहिनामिह । भीमस्य वणिज इव स्थाने स्थाने न संशयः॥९६८॥ [युग्मम्] तथाहि–
श्रीपुरे धीधनः श्रेष्ठी वसति स्म धनी महान् । तस्याट्टे बुद्धयो बह्वयो लभ्यन्त एव निश्चयः ॥९६९॥
तत्र गतोऽन्यदा भीमो विहृत्यर्थं रमापुरात् । ग्राममध्ये भ्रमन् बुद्धिहट्टे च समुपागमत् ॥९७०॥
भीमोऽवग् वस्तु लभ्येत किं किं श्रेष्ठिन् तवापणे । श्रेष्ठी प्राह धियश्चार्व्यो लभ्यन्ते न क्रयाणकम् ॥९७१॥
चतुःशतं द्रमान् लात्वा श्रेष्ठ्यदाद् धीचतुष्टयम् । चत्वारः पुरुषा यद्यद्वदन्ति क्रियते हि तत् ॥९७२॥
सरसोऽनारके स्नानं कर्त्तव्यं भवता क्वचित् । नाध्वन्येकेन गन्तव्यं वाच्यं गुह्यं नच स्त्रियः ॥९७३॥
मूढे कार्ये ममोपान्ते आगन्तव्यं त्वया क्वचित् । बुद्धिचतुष्टयं लात्वा भीमोऽचालीत् ततः पुरात्॥९७४॥

क्रमाद् भ्रमन् ययौ चन्द्रपुर्यां क्षुत्तृड्विबाधितः । सुप्तो देवकुले रात्रौ नमस्कारपरायणः ॥९७५॥
इतो वैदेशिकः कश्चिदेत्य तस्मिन् पुरे तदा । कस्याचेत् श्रेष्ठिनो हट्टे सुष्वाप निशि निर्भरम् ॥९७६॥
उत्पन्नशूलरोगेणाकस्माद्वैदेशिको मृतः । हट्टस्वामी समायातः श्रेष्ठी स्वीयनिकेतनात् ॥९७७॥
दृष्ट्वा मृत नरं दध्यौ किमय कर्षयिष्यते । मिलिता मानवा द्रष्टुं जल्पन्ति स्मेति ते तदा ॥९७८॥
कृष्यतामारणात् शीघ्रमित्युक्ते हट्टपतिर्जगौ । ज्ञातिर्न ज्ञायते स्पर्शः क्रियतेऽस्य कथं स्वयम् ॥९७९॥
ततो महाजनाः प्रोचुर्निःस्वस्य कस्यचित्पुनः । दीयते भोजन सोऽतः कर्षयिष्यति हट्टतः ॥९८०॥
ययुर्महाजना हट्टस्वामियुक्ता मरूत्कुले । दृष्ट्वा निःस्व जगुर्हट्टात्कर्षय त्व मृतं जनम् ॥९८१॥
हट्टस्वाम्यदन तुभ्यं दास्यत्येषोऽत्र सुन्दरम् । ततो निःस्वो वचस्तेषामङ्गीकृत्य मृत च तम् ॥९८२॥
रज्जुबन्ध ततः प्रेतगृहेऽमुञ्चन्जनेस्तदा । तस्य वस्त्राञ्चलेऽपश्यद् दीव्यद्रत्नचतुष्टयम् ॥९८३॥[युग्मम्]
लात्वा तानि ययौ स्नान कर्तुं निःस्वः सरोवरम् । आरके प्रविशन् दध्यावाचैका धिषणा मया ॥९८४॥
अनारके ततः स्नान कृत्वा श्रेष्ठिगृहे गतः । भोक्तुं चोपाविशद् यावत् तावत्तान्यसस्मरत् ॥९८५॥
समेत्यानारके रत्नचतुष्क विस्मृतं तदा । लात्वा स्तौति स्म तां बुद्धिं विक्रीतामादिमं तदा ॥९८६॥
हृष्टो रत्नाप्तितः पश्चादेत्य श्रेष्ठिनिकेतने । भुक्त्वा मध्येपुर नानाकौतुकानि निरीक्षते ॥९८७॥
एकाकिना न गन्तव्यमिति स्मृत्वा धियं स च । व्रजन्त सेहलं लात्वा द्वितीयं चलितोऽग्रतः ॥९८८॥

पश्यन् ग्रामादि ग्रीष्मर्तौ मध्याह्ने विपिने क्वचित् । मुत्कलं सेहलं मुक्त्वा सुप्तो वटतरोरधः ॥९८९॥
वृक्षाद् बहिः समेत्याहिः भीमं दशति यावता । सेहलेन कृतस्तावच्छतखण्डो रुषा रणात् ॥९९०॥
भीमः सुप्तोत्थितः सर्पं सेहलेन हतं तदा । वीक्ष्य बुद्धिं तृतीयां च स्तवीति स्मात्मनो हिताम् ॥९९१॥
ततो हरपुरे हीरसुतां रूपवतीं वराम् । सद्यः सदुत्सवं भीमः परिणीय स्थितः सुखम् ॥९९२॥
स्वर्णद्वीपेऽब्धिमार्गेण गत्वा प्राप धनं बहु । सद्यःफलानि चिर्भट्या बीजानि श्रेष्ठिराट् पुनः ॥९९३॥
पश्चादेत्य निजे गेहे तानि बीजानि नित्यशः । उप्त्वा फलानि भार्यायै चिर्भिट्याः प्रददौ रहः ॥९९४
भार्ययोक्तं च चिर्भट्याः फलानि नित्यशः कुतः । आनयसि ततस्तेन तत्स्वरूपं निवेदितम् ॥९९५॥
पूर्वं रूपवती श्रीदश्रेष्ठिसंसक्तमानसा । उपायाद् गन्तुकामापि कियत्कालं स्थिताऽस्ति च ॥९९६॥
श्रीदाग्रे रूपवत्योक्तमेष्यामि त्वद्गृहेऽहकम् । श्रीदोऽवग् यदि भो बाले समेष्यसि ममालये ॥९९७॥
तदा रहसि बीजानि वह्नौ क्षिप्त्वा च पाचय । छलं कृत्वा न चेद् गेहे मदीये त्वं समेष्यसि ॥९९८॥
तदा भूमीपती रुष्टः सर्वस्वं मे हरिष्यति । रूपवती जगौ वाक्यं करिष्येऽहं तवोदितम् ॥९९९॥
ततोऽभ्येत्य नृपास्थायां श्रीदः श्रेष्ठी उपाविशत् । तदा भीमो महीपालमिलनाय समाययौ ॥१०००॥
तदा श्रीदो जगौ सद्यःफलानि बीजकानि हि । दृश्यन्ते साम्प्रतं केषां जनानां न निकेतने ॥१००१॥
तदाऽभिमानतो भीमो जगौ नैवं प्रजल्प्यते । सद्यःफलानि बीजानि सन्त्यत्र मम सद्मनि ॥१००२॥

श्रीदोऽवग् नहि जल्प्येत कूट कुत्रापि मानवैः । भवन्ति यदि बीजानि तादृक्षाणि तवालये ॥१००३॥
तदाऽसिला रमा सद्यो ग्रहीतव्या त्वया वणिग् । तादृक्षाणि च बीजानि न सन्ति तव सद्मनि ॥१००४॥
३ तदाऽहकं शय यस्योपरि दास्यामि तत्क्षणात् । त ग्रहीष्याम्यह भीमाभीष्टं तव निकेतनात् ॥१००५॥
बीजान्यानीय भूपाग्रे उप्तानि वणिजा यदा । न फलितानि भीमेन हारितं च तदाऽचिरात् ॥१००६॥
जारोऽवग् गम्यते गेहे तव भीमाधुना द्रुतम् । द्विपदादि ग्रहीष्यामि वस्तु रम्यमह स्फुटम् ॥१००७॥
६ गृहिणीग्रहणे वाञ्छा मत्वैतज्जल्पनात्तदा । बुद्धिदस्य धनस्यान्ते गत्वा सर्व जगौ च तत् ॥१००८॥
हारिता गृहिणी याति यद्यन्यस्य निकेतने । तदा वर्यमतिरपि पुमान् (न) शोभां समाप्नुयात् ॥१००९॥
प्राप्तुं पारमपारस्य पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां दुश्चरितस्य नो पुनः ॥१०१०॥
९ धनोऽवग् वस्तु निःशेषं पत्नीयुक्त द्वितीयकौ । मुक्त्वा दत्त्वा च निःश्रेणी श्रीदं प्रतिवदेरिति ॥१०११॥
चटित्वोपरि गेहस्य निःश्रेण्या लाहि वस्तु च । चटने स यदा पाणिं दत्ते निःश्रेणिकोपरि ॥१०१२॥
जल्पेथास्त्व तदा त च प्रत्येवं स्फुटया गिरा । इमा निःश्रेणिकां पाणिस्पर्शनाल्लाहि नैगम ! ॥१०१३॥
१२ भीमः पश्चाद् गृहेऽभ्येत्य बुद्धिदोक्तमशेषतः । कृत्वा यावत्स्थितस्तावज्जारस्तत्र समागमत् ॥१०१४॥
गृहोपरि स्थिता भीमपत्नी रूपवती शठा । आत्मानं ज्ञापयामास जाराय वणिजे तदा ॥१०१५॥
ता तादृक्षं स्वसङ्केतं कुर्वाणां वीक्ष्य गेहिनीम् । भीमो निजसधर्मिण्या जज्ञौ दुश्चरितं तदा ॥१०१६॥

॥ ७७ ॥

जारो यावच्च निःश्रेण्या उपरिष्टान्निजं शयम् । दत्त्वोर्ध्वं चटति स्माशु लातुं भीमनितम्बिनीम् ॥१०१७॥
तावद्भीमो जगौ स्वीयहस्तस्पृष्टाधिरोहिणीम् । गृहीत्वा गच्छ जार ! त्वं सद्यः स्वीयनिकेतनम् ॥१०१८॥
३ छलितश्च तदा जारः किंकर्तव्यजडोऽभवत् । ततः श्रेष्ठी प्रियां जज्ञौ तादृक्षां भीमनैगमः ॥१०१९॥
दुश्चारिणीं प्रियां भीमः कर्षयित्वा गृहाद् बहिः । पर्यणैषीत्प्रियामन्यां विनीतां लसदुत्सवम् ॥१०२०॥
एवं ये महतां वाक्यमङ्गीकुर्वन्ति सादरम् । तेषां समीहितं कार्यं सेत्स्यति नात्र संशयः ॥१०२१॥
६ मासत्रयावधि क्ष्मापः कारितो मन्त्रिणा तदा । ज्ञातुं तत्पुरभूपादि चचाल सचिवेश्वरः ॥१०२२॥
भूरिदेश–पुर–ग्रामा–कर–शैल–वनादिषु । भ्रमन्मन्त्रीश्वरः खिन्नो रत्नवत्यां ययौ पुरि ॥१०२३॥
गत्वा जिनालये नत्वा स्तुत्वा श्रीऋषभं जिनम् । मेहीकुन्दुविकागेहे भोक्तुं मन्त्री उपाविशत् ॥१०२४॥
९ श्यामास्यं मन्त्रिणं दृष्ट्वा कुन्दुविका जगावदः । कुतोऽस्ति श्यामलं वक्त्रं दुःखं कथय सम्प्रति ॥१०२५॥
ततो मन्त्री निजं कार्यं भूपसत्कमचीकथत् । मेही प्राह भव स्वस्थः कार्यशुद्धिर्भविष्यति ॥१०२६॥
रत्नकेतुपुरे गन्तुं यद्यस्तीहा तवानघ । तदाऽत्रानय भूपालं कार्यशुद्धिकृते द्रुतम् ॥१०२७॥
१२ हृष्टो मन्त्री ततोऽभ्येत्य स्वपुर्यां भूपसन्निधौ । कार्यशुद्धिकरीं वार्तां कथयामास मूलतः ॥१०२८॥
सपादलक्षमूल्यानि रत्नान्यानीय भूपतिः । मन्त्रियुक्तो ययौ रत्नवत्यां पुरि प्रमोदितः ॥१०२९॥
मिलितो भूपतिर्मेह्याः प्रीणितो भोजनादिभिः । उक्तं चेतः पुरात् तच्च योजनानां शतत्रयम् ॥१०३०॥

सौभाग्यसुन्दरी कन्या विद्यते नरद्वेषिणी । राज्ञोक्त तत्र यानेच्छा विद्यते तेन मां नय ॥१०३१॥
मेद्दी प्राह रुचिस्तेऽस्ति तत्र गन्तु पुरि द्रुतम् । तदा त्वं मन्त्रियुक् शय्यामलङ्कुरु निवेशनात् ॥१०३२॥
शय्याऽसीनो नृपो मन्त्रियुक्तो मेद्या क्षणात्तदा । नीतो द्युविद्यया रत्नकेतुपुर्यां वहिर्वने ॥१०३३॥
उत्तीर्णाब्धिं नृप मेद्याः प्रोक्तमेतत्पुरं हि तत् । अहं पश्चाद्गमिष्यामि निज कार्यं च साधय ॥१०३४॥
राजा प्राह गतिः का नो विद्यते मे द्युगामिनी । तेन पश्चात्कथं पुर्यां स्वस्यां मया गमिष्यते ॥१०३५॥
मेद्योक्त च पुरा–वास–भूप–सौभाग्यसुन्दरीः । प्रपश्यतं युवां सम्यग् स्वस्थीभूय निरन्तरम् ॥१०३६॥
गत्वा स्वसदने सद्य इत एकादशाहनि । आयास्यामि वनेऽत्राहं प्रोक्त्वा कुंदनिका ययौ ॥१०३७॥
विद्यया नृपतिः कन्या वभूव रूपशालिनी । द्विजरूपधरो मन्त्री चक्रे तां कन्यका करे ॥१०३८॥ [ युग्मम् ]
पश्यन् पदे पदे पुर्यां शोभा मन्त्री मनोहराम् । गत्वा संसदि भूपस्याशीर्वाद प्रददौ स्फुटम् ॥१०३९॥
भूपेनोक्तं कुतः स्थानात्कि कुतऽत्रागतो वद । द्विजोऽवक् त्वत्पुरं द्रष्टु श्रुत्वा दूरादिहागमम् ॥१०४०॥
भूपोऽवग् नगरी पश्य रत्नसौधविराजिताम् । द्विजः प्रोवाच कन्यायाः प्रतिबन्धोऽस्ति मेऽधुना ॥१०४१॥
तेनेय कन्यका भूप त्वदीयेऽन्तः पुरेऽधुना तिष्ठत्वहं पुनर्यावत्करोमि नगरेक्षणम् ॥१०४२॥
भूपादेशात्सुतां विभो विमुच्यान्तःपुरे तदा । पुरीं द्रष्टुं ययौ हट्टश्रेण्यादिषु प्रमोदितः ॥१०४३॥
प्रश्नप्रहेलिकाभिश्च द्विजकन्या नृपाङ्गजाम् । अरञ्जयत्तथा नित्यं यथा साऽजनि भक्तिभाग् ॥१०४४॥

॥ ७९ ॥

विप्रपुत्र्याऽन्यदा भूपपुत्री पृष्टेति हे सखि ! । किमर्थं क्रियते द्वेषो नृषु भूपाङ्गजा जगौ ॥१०४५॥
मलयाद्रिमहाटव्यां चुटिका-चुटकद्वयम् । प्रासादे आदिदेवस्य सदा पूजां चकार च ॥१०४६॥
चुटी प्राह चुटेदानीं नीडं च क्रियते पते ! । आसन्नः प्रसवानेहा विद्यते साम्प्रतं मम ॥१०४७॥
एवमुक्तोऽपि बहुशो जजल्प नो मनागपि । तृणान्यानीय भूयांसि नीडं चुटी व्यधात्तदा ॥१०४८॥
ततस्तया कृते नीडे तिष्ठति स्म स सन्ततम् । इतो लग्नो दवस्तस्मिन् वने वंशालिघर्षणात् ॥१०४९॥
चुटी प्राह पते ! नीरमानीय साम्प्रतं ह्रदात् । सिच्यते आत्मनो नीडं दह्यते न यथा मनाग् ॥१०५०॥
एवमुक्तोऽपि बहुनोत्तस्थौ च चुटको यदा । तदानीय जलं नीडं सिक्तं चुटिकया तया ॥१०५१॥
एवं तस्याश्च कुर्वन्त्यास्तत्र दावाग्निरायर्यौ । उत्थाय चुटको दुष्टो ययौ कुत्रापि कानने ॥१०५२॥
दग्धा दावाग्निना साऽहं नाभेरर्चाविधानतः । अस्मिन् पुरेऽभवं रत्नकेतुराजाङ्गजा ननु ॥१०५३॥
जातिस्मरणतो ज्ञात्वा नृषु द्वेषो ममाजनि । दुष्टाशया नराः प्रायो भवन्त्येव न संशयः ॥१०५४॥
विप्रपुत्री जगौ भूपपुत्रि सारङ्गलोचनाः । कूटासत्यमृषावादवादिन्यः स्यू रुपारुणाः ॥१०५५॥ यतः—"अनृतं साहसं०"॥
आकर्ण्यैतज्जगौ राजपुत्री विप्रसुतां प्रति । नृषु द्वेषो न यात्येष क्रियते सखि किं मया ॥१०५६॥
विप्रपुत्री जगौ भूपपुत्रि ! क्रोधेन तत्क्षणात् । विहितं सुकृतं याति वायुनेवाभ्रसन्ततिः ॥१०५७॥
इतो दृष्ट्वा पुरीशोमा भूपान्तेऽभ्येत्य स द्विजः । ययाचे भूपतिं पुत्रीं निजां मुक्तां पुरा स्फुटम् ॥१०५८॥

आनेतुं तत्सुता चेटी प्रेषिताऽगात्सुतान्तिके । प्रोक्तं चास्याः पिताऽऽयातः प्रेषयेमा नृपान्तिके ॥१०५९॥
राजपुत्री जगावस्या वियोगं न सहे क्षणम् । एतच्चेटी महीपालपार्श्वे गत्वा जगाद च ॥१०६०॥
श्रुत्वैतद् ब्राह्मणः प्राह भूपार्पय सुतां मम । नोचेदहं करिष्यामि हत्यां स्वस्यात्मनोऽचिरात् ॥१०६१॥
ततस्तां कन्यकां पुत्रीपार्श्वादानीय भूपतिः । ददौ द्विजन्मने तस्मै सोऽपि विप्रोऽचलत्ततः ॥१०६२॥
स्मारं स्मारं गुणग्रामं तस्या भूपालनन्दीनी । बभूव दुःखिनी जातिमिव रोलम्बगेहिनी ॥१०६३॥
द्विजोऽखिल पुर तस्या दर्शयित्वाऽभितः क्रमात् । ईदृक् पुर न कुत्रास्तीति प्रजल्पन् ययौ बहिः ॥१०६४॥
पूर्वसकेतिते स्थाने गत्वा रूपं निजं नृपः । प्रादुश्चकार यावच्च तावन्मेही समाययौ ॥१०६५॥
खट्वाप्रयोगतः पुर्यां नीत्वा मन्त्रि-महीपती । मेही कुन्दुविका भक्तिं व्यधाद्भोजनदानतः ॥१०६६॥
भूपोऽवक् सत्परीवार लात्वाऽत्रैष्याम्यहं पुरि । खट्वाप्रयोगतस्तत्र नेतव्योऽहं त्वयाऽङ्गने ! ॥१०६७॥
मेही प्राह त्वया शीघ्रमागन्तव्यं महीपते । ईहितं ते करिष्यामि नात्र कार्या विचारणा ॥१०६८॥
भूपोऽवग् तव केनैषा दत्ता खट्वा नरेण च । मेही प्राह धरापुर्यामभूच्छ्रेष्ठी धनाभिधः ॥१०६९॥
शत्रुञ्जयादितीर्थेषु तस्य धन्याभिधा प्रिया । कृत्वा यात्रा सदा धर्मपरा प्रापादिमं दिवम् ॥१०७०॥
च्युत्वा चास्मिन् पुरे स्वर्गात् मेही जाता मृगेक्षणा । धनो धर्मपरो मृत्वा द्वितीयां दिवमीयिवान् ॥१०७१॥
स्मृत्वा पूर्वं भवं सोऽपि स्वर्गादेत्य सुधाशनः । मोहान्मेह्यै ददौ खट्वामेकामाकाशगामिनीम् ॥१०७२॥ यतः—

॥ ८१ ॥

"पंचसु जिणकल्लाणेसु चेव महरिसि० ॥" "चत्तारि पंचजोअणसंयाइं गंधो अ मणुअलोगस्स" ॥१०७३॥
ततः प्रभृति सा मेही कुर्वत्युपकृतिं सदा । धर्मकर्मपरा कालं गमयामास किञ्चन ॥१०७४॥ यतः—
"आरोग्यं सौभाग्यं धनाढ्यता नायकत्वमानन्दः । कृतपुण्यस्य स्यादिह सदा जयो वाञ्छितावाप्तिः" ॥१०७५॥ इत्यादि ।
साऽहं ज्ञेया ततो भूपो हृष्ट आपृच्छ्य तां तदा । मतिसारयुतः स्वीयां नगरीं समुपागमत् ॥१०७६॥
ततो यात्राछलेनोर्वीपतिः सारचमूयुतः । गत्वा रत्नवतीपुर्यां मेह्याश्च मिलितो रहः ॥१०७७॥
प्रोक्तं राज्ञा च मां तत्र प्रापयाशु बलान्वितम् । ततोऽहमात्मना कन्यां परिणेष्यामि तां छलात् ॥१०७८॥
मेह्योक्तं भवता(तोऽ)शेषा चमूः स्पृशतु खट्विकाम् । तथा स्पर्शनतः खट्वा चचाल गगने क्रमात् ॥१०७९॥
राजा चमूयुतः खट्वायोगात्तस्मिन्मरुद्वने । मुक्तो मेह्या ततः सीम व्यापयन् तुरगादिभिः ॥१०८०॥
परचक्रागमभ्रान्त्या रत्नकेतुमहीपतिः । संनह्य विग्रहं कर्तुं निस्ससार पुराद् बहिः ॥१०८१॥
इतोऽरिमर्दनक्ष्मापशिक्षितो निजसेवकः । समेत्य रत्नकेतुक्ष्मापालोपान्ते जगावदः ॥१०८२॥
अरिमर्दनभूपालो धर्मिष्ठो धर्मशेखरः । अत्राद्य परदेशीयो यात्रां कर्तुं समागमत् ॥१०८३॥
नालोकते मुखं स्त्रीणां स्त्रीणां वाक्यं शृणोति न । यद्येति वनिता दृष्टिगोचरे स तदा मृतः ॥१०८४॥
आकर्ण्यैतन्नृपः स्वस्थो रत्नकेतुमहीपतिः । अरिमर्दनभूपालचमूमध्ये समीयिवान् ॥१०८५॥
इतोऽरिमर्दनः क्ष्मापः श्रीयुगादिजिनेशितुः । अर्चां चक्रेऽष्टधा चारुपुष्पगन्धाक्षतादिभिः ॥१०८६॥

"वरगंध–धूव–चुक्खक्खएहि कुसुमेहिं पवरदीवेहिं । नेवेज्ज–फल–जलेहि अ जिण पूआ अट्ठहा भणिया ॥१०८७॥
जो पूएइ तिसझ जिणिंदराय तहा विगयदोसं । सो तइअभवे सिज्झइ अहवा सत्तट्ठमे जम्मे" ॥१०८८॥
पूजा कृत्वा नृपौ द्वौ च मिलितौ भक्तिपूरितौ । रत्नकेतुर्जगौ कुत्र किमर्थं गम्यतेऽधुना ॥१०८९॥
अरिमर्दनभूपालो जगौ यात्रा जिनेशितुः । कर्तुं समागतोऽत्राहं ससारभ्रमणाच्छिदे ॥१०९०॥ यतः–
"श्रीतीर्थपान्थरजसा विरजीभवन्ति, तीर्थेषु बंभ्रमणतो न भवे भ्रमन्ति ।
द्रव्यव्ययादिह नराः स्थिरसम्पदः स्युः, पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ १०९१॥
पल्योपमसहस्रं तु ध्यानाल्लक्षमभिग्रहात् । दुष्कर्म क्षीयते मार्गे सागरोपमसञ्चितम् ॥१०९२॥
वपु. पवित्रीकुरु तीर्थयात्रया, चित्तं पवित्रीकुरु धर्मवाञ्छया । वित्तं पवित्रीकुरु पात्रदानतः कुलं पवित्रीकुरु सच्चरित्रैः ॥
धर्मिष्ठं भूपतिं दृष्ट्वा रत्नकेतुर्जगावदः । भोजन कुरु मद्गेहे प्रसद्य साम्प्रतं द्रुतम् ॥१०९४॥ यतः–
"अभय सुपत्तदाण अणुकपा उचिअकिचिदाण च । दोहिवि मुक्खो भणिओ तिन्नि उ भोगाइअं दिंति ॥१०९५॥
न कय दीणुद्धरण न कय साहम्मिआण वच्छलं । हिअयंमि वीअराओ न धारिओ हारिओ जम्मो ॥१०९६॥
केसिं च होइ चित्त वित्तमन्नेसिमुभयमन्नेसिं । चित्तं वित्तं पत्तं तिन्नि वि केसिं चि धन्नाणं" ॥१०९७॥
पान्थभूपो जगौ मध्येपुर नेष्याम्यहं कदा । यद्यायाति ममाप्येका भामिनी नेत्रगोचरे ॥१०९८॥
तदा मया विधातव्यः प्राणत्यागः स्वयं खलु । तेन त्वया न वक्तव्यं भोजनाय महीपते ॥१०९९॥

॥ ८३ ॥

राज्ञोक्तं निखिला नार्यः क्षेप्स्यन्ते स्वगृहान्तरे । अस्मत्पत्न्योऽपि रहसि स्थास्यन्ते वचनान्मम ॥११००॥
अरिमर्दनभूपेन मानिते सति भूपतिः । एत्य स्वसदने सर्वां पुरीं सज्जस्तथाऽकरोत् ॥११०१॥
विधाय नगरीशोभां भोजनं सुन्दरं पुनः । रत्नकेतुर्नृपं पान्थमानयामास सद्मनि ॥११०२॥
नृद्वेषिणीसुतावासोपान्ते भोजनमण्डपे । चकार गौरवं भूपो वातक्षेपादिभिर्भृशम् ॥११०३॥ यतः–
"पानीयस्य रसः शैत्यं परान्नस्यादरो रसः । आनुकूल्यं रसः स्त्रीणां मित्राणां वचनं रसः" ॥११०४॥
पुत्रीगेहान्तरे तस्यारिमर्दनमहीपतेः । विश्रामाय ददौ स्थानं रत्नकेतुर्नृपस्तदा ॥११०५॥
भूपः पप्रच्छ भो भूप द्वेषो नार्यां कथं तव । प्राहारिमर्दनः पूर्वभवोद्भूतोऽभवन्मम ॥११०६॥
श्रुत्वैतद्वचनं भूमिपतेः पूर्वभवं तदा । श्रोतुं भूपाङ्गजा छन्नं तस्थौ कौतुकिताशया ॥११०७॥
तदाऽवग् नृपतिरत्नकेतुर्भूधार्मिकाग्रणीः । स्वं प्राचीनभवं स्वीयं विस्तराज्जल्प मेऽग्रतः ॥११०८॥
प्राहारिमर्दनः पूर्वभवे मलयपर्वते । चटिकाचटकद्वयं वसति स्म निजेच्छया ॥११०९॥
प्रासादे ऋषभं देवं वारि–पुष्प–फलादिभिः । भक्त्या चुटचुटीयुग्मं पूजयामास शर्मणे ॥१११०॥
चुटः प्राहान्यदा नीडं क्रियते चुटि! साम्प्रतम् । एवं भूयश्चुटेनोक्ता नाशृणोन्न जजल्प च ॥११११॥
चुटः स्वयं व्यधान्नीडं यावत्कष्टेन पादपे । तावद्दावानलो वंशघर्षाज्जज्वाल कानने ॥१११२॥
आगच्छन्तं दवं वीक्ष्य चुटोऽवक् चुटिकां प्रति । आनीय सलिलं नीडं क्लिन्नं च क्रियते द्रुतम् ॥१११३॥

एव भूयश्चुटेनोक्ता चुटी दुष्टाशया तदा । नोत्तस्थौ न जगौ किन्तु मौनं कृत्वा स्थिता भृशम् ॥१११४॥
नीडं सिञ्चन् शुको नाभिपुत्रध्यानपरायणः । दग्धो दवाग्निना सोऽहं जातो भूपोऽरिमर्दनः ॥१११५॥
श्रुत्वा भूपाङ्गजा दध्यौ मृपा किमेप जल्पति । मयाऽथवा भवः पूर्वो विपरीतो निरीक्षितः ॥१११६॥ यतः—
"अज्ञानेनावृता जीवा न जानन्ति हिताहितम् । धत्तूरिता जनाः किं न पश्यन्ति कनकं जगत् ॥१११७॥
ध्यात्वेति भूपभूः प्राह कूटं किं भूप जल्पसि । समानीय मया नीरं नीड सिक्तं जलाशयात् ॥१११८॥
भूपपुत्रो जगौ नीडं सिक्तं च वारिणा मया । एवं मिथः कलिर्द्वाभ्यां चक्रे भूयः प्रजल्पनात् ॥१११९॥
उत्सार्य द्विपटीं यावद् वीक्षते भूमिभुग्मुखम् । नृपु द्वेपो गतस्तावत्तस्या ध्वान्तं रवेरिव ॥११२०॥
दृष्ट्वैतन्नृपतिं हृष्ट ग्रुत्कलाप्यारिमर्दनः । यावच्चचाल तावच्च भूपपुत्री जगाविदः ॥११२१॥
पूर्वे भवेऽभवत्कान्तो ममायं मेदिनीपतिः । भवेऽस्मिन् भवतादेप पतिर्नो चेद्विभावसुः ॥११२२॥
ततो वलाचदा रत्नकेतुर्भूपो निजाङ्गजाम् । अरिमर्दनभूपाय ददौ चारुतरोत्सवम् ॥११२३॥ यतः—
"धर्मोयं धनवल्लभेपु धनदः कामार्थिना कामदः, सौभाग्यार्थिपु तत्प्रदः किमपर पुत्रार्थिनां पुत्रदः ।
राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणाम्, तत्कि यन्न ददाति किं च तनुते स्वर्गापवर्गावपि"॥११२४॥
ततो रत्नवतीं कन्या परिणीयारिमर्दनः । मेहीसांनिध्यतो रत्नवत्याः पुर्याः समाययौ ॥११२५॥
रसवत्यादिना भक्ती राज्ञो मेह्या कृताऽऽदरात् । मणीचतुष्टयं लक्षमूल्यं मेह्यै नृपो ददौ ॥११२६॥

॥ ८५ ॥

मुत्कलाप्य च तां कैश्चित्प्रयाणैर्भूमिपोऽध्वनि । वन्दमानश्च तीर्थानि स्वं पुरोद्यानमागमत् ॥११२७॥
तलिका–तोरणे वारिच्छटां वन्दनमालिकाम् । मन्त्रीशः कारयामास पुरीशोभां च सर्वतः ॥११२८॥
सुमुहूर्ते लसद्वाद्या–तोद्य–गीतपुरस्सरम् । यावदायाति भूपालः पत्नीयुक्तो नृपाध्वनि ॥११२९॥
तावत्तूर्यारवं श्रुत्वा द्रष्टुं भूपं प्रियान्वितम् । त्यक्त्वा निजं निजं कार्यं मिलिता मानवाः स्त्रियः ॥११३०॥
एकनेत्राञ्जिता काचिदर्धगुम्फितमस्तका । अर्धमण्डितवक्त्राब्जा काचिद् द्रष्टुं समाययौ ॥११३१॥ यतः–
"तीहं तिन्नि पीआरडां कलि कज्जल सिंदूर । अन्न तिन्नि अइवल्लहां दूध जमाई तूर"॥११३२॥
पदे पदे ददद् दानं गीतनृत्यपुरस्सरम् । अलंचकार भूपालः सौधं पत्नीयुतस्तदा ॥११३३॥
संयोगः शशि–रोहिण्योः पार्वती–श्वरयोरिव । जातस्तयोर्महीपाल–पत्न्योः सौभाग्यशालिनोः ॥११३४॥
गर्भे सौभाग्यसुन्दर्याः कोऽपि पीवरपुण्यवान् । अवतीर्णः शुभे घस्रे जीवः सत्स्वप्नसूचितः ॥११३५॥
गर्भानुभावतस्तस्या ये येऽभूवन् मनोरथाः । देवपूजादयस्ते ते पूरिता मेदिनीभुजा ॥११३६॥
नृपपत्नी शुभे घस्रे सुतं सूते स्म सुन्दरम् । जन्मोत्सवं नृपः कृत्वा मेघ इत्यभिधां ददौ ॥११३७॥
धात्रीभिः पञ्चभिस्तन्यपानदानादिभिः सदा । लाल्यमानः क्रमाद् वृद्धिं जगाम नृपनन्दनः ॥११३८॥ यतः–
"उत्पतन् निपतन् रिङ्खन् हसन् लालावलीं वमन् । कस्याश्चिदेव धन्यायाः क्रोडमाक्रमते सुतः" ॥११३९॥
पाठाय लेखशालायां मुक्तो मेघो महीभुजा । पण्डितान्ते पठन् कर्म–धर्मशास्त्राणि भूरिशः ॥११४०॥ यतः–

"जायंमि जीवलोए दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ जेण मओ सुग्गइं जाइ ॥११४१॥
आहार-निद्रा-भय-मैथुनानि सामान्यमेतत्पशुभिर्नराणाम् । ज्ञानं विशेषः खलु मानुषाणां ज्ञानेन हीनाः पशवो मनुष्याः"॥
ततश्चन्द्रपुरस्वामि–चन्द्रभूपाङ्गजां वराम् । नाम्ना मेघवतीं मेघः परिणिन्ये शुभेऽहनि ॥११४३॥
श्रीसुन्दरे वने नाभिनन्दनं नन्तुमर्हतम् । वर–वध्वौ गतौ नानानृत्य–गीतपुरस्सरम् ॥११४४॥
मूर्तिं दृष्ट्वाऽऽदिनाथस्य मुमूर्छतुर्वधू–वरौ । शीतोपचारतः सज्जीकृतौ नैव जजल्पतुः ॥११४५॥
उपचाराः कृता मन्त्र–तन्त्रैर्भूपेन भूरिशः । न जजल्प मनाग् मेघकुमारो गृहिणीयुतः ॥११४६॥ यतः–
"वैद्या वदन्ति कफ–पित्त–मरुद्विकारम्, सांवत्सरा ग्रहगतं प्रवदन्ति दोषम् ।
भूतोपसर्गमथ मन्त्रविदो वदन्ति, कर्माणि पूर्वविहितानि वदन्ति सन्तः"॥११४७॥
इतस्तत्र पुरोद्याने विहरन् गुणसूरिराट् । बोधयितुं जनान् भव्यानाययौ केवली क्रमात् ॥११४८॥
उद्यानपालकमुखान्निशम्यागमनं गुरोः । राजा पुत्र–वधू–पत्नीयुक्तो वन्दितुमीयिवान् ॥११४९॥ अत्रोपदेशः–
"धर्मो विशिष्टः पितृ-मातृ-पत्नी-सुहृत् सुत स्वामि-सहोदरेभ्यः। सनातनोऽयं सह याति मृत्यौ दुःखापहोऽमी पुनरीदृशा न॥
धर्मो महामङ्गलमङ्गभाजा धर्मो जनन्युद्दलिताखिलार्त्तिः । धर्मः पिता पूरितचिन्तितार्थो धर्मः सुहृद्वर्त्तितनित्यहर्षः ॥
दानं विपच्छेदनिदानदानं शील सुखोन्मीलनशालिशीलम् । तपः स्फुरत्पङ्कतपातपत्रि सद्भावना स्याद्भवभावनाशा ॥
भूपः पप्रच्छ भगवन्न जल्पतः सुत–स्नुषे । कर्मणा केन स प्राह गुरुः श्रीगुणसूरिराट् ॥११५३॥

॥ ८७ ॥

अजल्पकारणे प्रोक्ते त्यक्त्वा द्वावपि मन्दिरम् । ग्रहीष्यतो व्रतं सद्यः संसाराम्बुधितारकम् ॥११५४॥
भूपः प्रोवाच यज्ज्ञावि गुरो ! भवतु तद् द्रुतम् । जल्पन्तौ क्रियेतां पुत्र–स्नुषे च भवताऽधुना ॥११५५॥
गुरुः प्राहानयोः पूर्वं श्रूयतां चरितं स्फुटम् । पुरा भीमपुरे शूरो महीपालोऽभवन्नयी ॥११५६॥
शूरेण वैरिणो वीरपुरं भग्नं जितो रिपुः । भटेन केनचित् सोमश्रेष्ठिनः सुत–पुत्रिके ॥११५७॥
धीर–वीरमतीनाम्न्यौ रूपलावण्यसुन्दरे । त्रिद्विवर्षमिते लात्वा नीते सौवपुरे तदा ॥११५८॥
कमलश्रेष्ठिनो दत्ते द्रव्येण भूयसा रहः । क्रमेण यौवनं प्राप्ते तावेव परिणायिते ॥११५९॥ त्रिभिर्विशेषकम् ।
तत्रान्यदा गुरुर्धर्मघोषो ज्ञानी समाययौ । कमलः प्रययौ नन्तुं गुरुराजं प्रियान्वितः ॥११६०॥ अत्रोपदेशः।
व्याख्यान्ते प्रियायुक्तः कमलोऽथ जगावदः । स्वामिन् किमनयोः प्रीतिर्बभूव कान्तकान्तयोः ॥११६१॥
जामि–सोदर्यसम्बन्धे गुरूक्ते तद्भवोद्भवे । श्रीसुन्दरे वने गत्वा नत्वा श्रीनाभिनन्दनम् ॥११६२॥
धीरस्त्यक्त्वा गृहं सद्यो ललौ दीक्षां प्रियायुतः । तप्त्वा तीव्रं तपः स्वर्गलोकं द्वावपि जग्मतुः ॥११६३॥
च्युत्वा ततो दिवस्तौ च जातौ तव सुत–स्नुषे । स्मृत्वा जातिस्मृतेः पूर्वभवं मौनं च चक्रतुः ॥११६४॥
ततः स्नुषा–सुते त्यक्त्वा मोहं पार्श्वे गुरोस्तदा । व्रतं जगृहतुर्भीमसंसाराम्बुधितारकम् ॥११६५॥ यतः–
"जह चयइ चक्कवट्टी पवित्थरं तत्तिअं मुहुत्तेण । न चयइ तहा अहन्नो दुब्बुद्धी खप्परं दमओ" ॥११६६॥
तप्त्वा तीव्रतपः कर्मग्रन्थिं छित्त्वाऽखिलां द्रुतम् । लब्ध्वा केवलविज्ञानं जग्मतुस्तौ शिवं क्रमात् ॥११६७॥ यतः–

"प्रणिहन्ति क्षणार्द्धेन साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः" ॥११६८
श्रुत्वाऽरिमर्दनो धर्मं प्राह किं सुकृतं कृतम् । मम येन मनोऽभीष्टं भवेऽस्मिन्वाऽजनि स्फुटम् ॥११६९॥
गुरुः प्राह त्वया पूर्वभवेऽकारि जिनार्चना । तेनाभूच्चिन्तितं तेऽत्र भवे सर्वं नरेश्वर ॥११७०॥
श्रुत्वैवं जिनधर्मं ससम्यक्त्वं गुरुसंनिधौ । लात्वाऽरिमर्दनः क्ष्मापः सप्रियो गृहमाययौ ॥११७१॥ यतः–
"संमत्तंमि अ लद्धे ठइआइं नरयतिरियदाराइं । दिव्वाणि माणुसाणि अ मुक्खसुहाइं सहीणाइं" ॥११७२॥
अरिमर्दनभूपालः सम्यक्त्वं विशदं ततः । प्रपाल्यागाच्छिवं सर्वकर्मराशिक्षयात्क्रमात् ॥११७३॥
इति श्रुत्वोपदेशं श्रीगुरुपार्श्वे शुको नृपः । वैराग्यवासितस्वान्तोऽभ्यागात् स्वीयमन्दिरम् ॥११७४॥
न्यस्य राज्ये सुतं लात्वा दीक्षां पार्श्वे गुरोः शुकः । कृत्वा कर्मक्षयं सद्यो जगाम शिवपत्तनम् ॥११७५॥
एवं शत्रुञ्जये यात्रां ये कुर्वन्ति तनूभुजः । लभन्ते ते शिवश्रेयः शुकराज इवाचिरात् ॥११७६॥

इति श्रीशुकराजकथा समाप्ता ॥

श्रुत्वैतद्विक्रमादित्यः प्रोवाच हे गुरूत्तम ! । देवान् शत्रुञ्जये तीर्थे नन्तुमिच्छास्ति मेऽधुना ॥११७७॥
विधायानुग्रहं सार्धागमनेन गुरूत्तम । वन्दापयन्तु सर्वज्ञान् तीर्थे शत्रुञ्जये मम ॥११७८॥ यतः–
"अवद्यमुक्ते पथि यः प्रवर्तते प्रवर्तयत्यन्यजनं च निःस्पृहः। स एव सेव्यः स्वहितैषिणा गुरुः स्वयं परं तारयितुं सदा क्षमः॥
महाव्रतधरा धीरा भैक्ष्यमात्रोपजीविनः । सामायिकस्था धर्मोपदेशका गुरवो मताः" ॥११८०॥

श्रीगुर्वादेशमासाद्य श्रीविक्रममहीपतिः । श्रीसंघं मेलयामास प्रेष्य कुंकुमपत्रिकाः ॥११८१॥
शुभेऽह्नि विक्रमादित्यो नन्तुं शत्रुञ्जये जिनम् । अनर्गलं ददद् दानं प्रस्थानं प्रददौ मुदा ॥११८२॥
चतुर्दश नृपास्तस्य संघे मुकुटवर्धनाः । शुद्धश्राद्धकुटुम्बानां लक्षा सप्ततिरेव च ॥११८३॥
सिद्धसेनादिसूरीशाः शतानि पञ्च सद्गुणाः । क्रियाकलापकुशलाश्चेलुर्नन्तुं जिनेश्वरम् ॥११८४॥
एकोनसप्ततिशतं हैमा देवालया वराः । शतत्रयमिता रुप्यमया जनमनोहराः ॥११८५॥
शतपञ्चमिता दन्तमया देवालयास्तथा । अष्टादशशतं काष्ठमयाश्च चलिताः पुनः ॥११८६॥
एका कोटी रथा लक्षद्वयं नवशतानि च । लक्षा अष्टादशार्वाणः षट् सहस्राणि हस्तिनः ॥११८७॥
वेसरोष्ट्रवृषादीनां मनुष्याणां च योषिताम् । विक्रमादित्यभूपालसंघे संख्या न विद्यते ॥११८८॥
देवालयपताकास्थकिंकिणीरुचिरक्वणाः । जाता आह्वयितुं सर्वदेशसंघजनानिव ॥११८९॥
पीनस्कन्धाः सदाकारा नानाभूषणभूषिताः । वहन्ति वृषभा देवालयान् कुञ्जरगामिनः ॥११९०॥
दिव्यरूपधराश्चारुभूषणा हरिणेक्षणाः । चतुःकोणस्थिता देवालये चामरपाणयः ॥११९१॥
गायन्त्यो जिननाथस्य गीतानि मधुरध्वनि । लीलया चालयन्ति स्म चामराणि मनोहराः ॥११९२॥ [ युग्मम् । ]
ग्रामे ग्रामे चलन्मार्गे स्नात्र–पूजा–ध्वजादिभिः । कुर्वन् प्रभावनां शत्रुञ्जयोपान्ते नृपो ययौ ॥११९३॥
अनर्गलं ददद् दानं श्रीशत्रुञ्जयपर्वतम् । आरुरोह जिनं नन्तुं विक्रमादित्यभूपतिः ॥११९४॥

विक्रमादित्यस्य शत्रुंजयादितीर्थयात्रा ।

॥ ९० ॥

स्नात्र पूजाध्वजारोपारात्रिकावाहनादिकम् । कार्यं सर्वं नृपः कृत्वा चकारेत्यर्हतः स्तुतिम् ॥११९५॥
सुरासुरमहीनाथमौलिमालानतक्रमम् । श्रीशत्रुञ्जयकोटीरमणिं श्रीऋषभं स्तुवे ॥११९६॥
३ विभो त्वत्पदराजीवं ये सेवन्ते जनाः सदा । सुरासुरनृपश्रेणी भजते तान् सुभक्तितः ॥११९७॥
तनोपि त्वं विभो यस्य मानसे वासमन्वहम् । तस्य पापानि गच्छन्ति तमासीव दिनोदयात् ॥११९८॥
निरीक्ष्य त्वन्मुखाम्भोजं सुरासुरसुखप्रदम् । कृतार्थोऽहमभूवं श्रीनाभिभूपालनन्दन ॥११९९॥
६ सुवर्णवर्णसंकाशदेहद्युतिभरप्रभो । निजाह्रिकमलावासं देहि मे नाभिनन्दन ॥१२००॥ इत्यादि स्तुतिः ।
"सय पमज्जणे पुण्णं सहस्सं च विलेवणे । सयसाहस्सिआ माला अणंतं गीअवाईए" ॥१२०१॥
तदैव पतितं किञ्चित्प्रासादं वीक्ष्य भूपतिः । पमच्छ सिद्धसेनार्यं प्रासादोऽयं पतिष्यति ॥१२०२॥
९ सिद्धसेनो गुरुः माह कारिताज्जिनमन्दिरात् । उद्धारे द्विगुणं पुण्यं प्रोक्तं श्रीजिननायकैः ॥१२०३॥ यतः–
"कारयन्ति मरुद्गेहं ख्यात्यर्थं केचनात्मनः । केचित्स्वस्यैव पुण्याय स्वश्रेयोऽर्थं च केचन" ॥१२०४॥
प्रासादोद्धारकरणे भूरि पुण्यं निगद्यते । उद्धारान्न परं पुण्यं विद्यते जिनशासने ॥१२०५॥
१२ पुराऽत्र पर्वते चक्रे प्रासाद भरतो नृपः । श्रीनाभेयजिनेशस्य मणिरूप्यमयं महत् ॥१२०६॥
अस्मिन्नेव महातीर्थे प्रासादमृषभप्रभोः । कारयामास सगरचक्रवर्ती द्वितीयकः ॥१२०७॥ यतः–
"मणि–रुप्प–कणयपडिम जत्थ रिसहचेइअं भरहविहिअं । सदुवीसजिणाययणं सो विमलगिरी जयउ तित्थम् ॥१२०८॥

॥ ९१ ॥

कयजिणपडिमुद्धारा पंडवा जत्थ वीसकोडिजुआ । मुत्तिनिलयंमि पत्ता तं सित्तुंजयमहातित्थं ॥१२०९॥
असंखा उद्धारा असंखपडिमाउ चेइआ संखा । जहिं जाया जयउ तयं सिरिसित्तुंजयमहातित्थं" ॥१२१०॥
पूर्वं बहुभिरुर्वीशैर्महेभ्यैश्च स्वभावतः । प्रासादाः कारिता अस्मिंस्तीर्थे भूरिधनव्ययात् ॥१२११॥
शत्रुञ्जये ततः सारक्षीरकाष्ठमयं महत् । प्रासादोद्धारमुर्वीशः कारयामास विक्रमः ॥१२१२॥
ततः श्रीविक्रमादित्यश्चलन् शत्रुञ्जयात्क्रमात् । श्रीरैवतगिरौ नेमिनाथं नन्तुं समागमत् ॥१२१३॥ [स्तवनं वाच्यम्
स्नात्रपूजा—ध्वजारोपा—वारिकावाहनादिकम् । कार्यं सर्वं नृपः कृत्वा चकारेति स्तुतिं मुदा ॥१२१४॥ अत्र नेमिनाथ-
यात्रां विस्तरतः कृत्वा द्वयोः श्रीतीर्थयोस्तदा । विक्रमार्कनृपोऽवन्तीं समागात्समहं पुरीम् ॥१२१५॥
सिद्धसेनगुरोः पार्श्वे शृण्वन् धर्मकथां सदा । श्रीविक्रमार्कभूपालश्चक्रे स्वं सफलं जनुः ॥१२१६॥
पालयन्न्यायमार्गेण पृथ्वीं साहसिकाग्रणीः । दानधर्मपरोऽत्यन्तं बभूव विक्रमार्यमा ॥१२१७॥
अन्यदा विक्रमादित्यः सभायां दीनमानवम् । समायान्तमजल्पन्तं निरीक्ष्य ध्यातवानिति ॥१२१८॥
"गतेर्भङ्गः स्वरो दीनो गात्रखेदो महाभयम् । मरणे यानि चिह्नानि तानि चिह्नानि याचके" ॥ १२१९॥
कृपाकवचितस्वान्तस्ततो विक्रमभूपतिः । दापयामास दीनारसहस्रं च दरिद्रिणे ॥२२२०॥
ततो न याचको यावद्वक्ति तावन्नृपो जगौ । कस्माश्च वदसीत्युक्तो स प्राहेति च दीनवाक् ॥१२२१॥
"लज्जा वारेइ महं असंपया भणइ मग्गि रे मग्गि । दिज्ज माणकनाउं देहीति न निग्गया वाणी" ॥१२२२॥

आकर्ण्यैतद् भृशं दीनमर्थिनो वचनं तदा । दापयामास भूपालो दीनारायुतमञ्जसा ॥१२२३॥
चमत्कारकर ब्रूहीत्युक्ते भूमीभुजा तदा । याचको वचनं स्फारं प्रोवाचेति पुनस्तदा ॥१२२४॥
"अनिस्सरंतीमपि देहगर्भात्कीर्तिं परेषामसतीं वदन्ति ।
स्वैर भ्रमन्तीमपि च त्रिलोक्यां त्वत्कीर्तिमाहुः कवयः सतीं तु" ॥१२२५॥
आकर्ण्यतद् भृशं वर्यमर्थिनो वचनं तदा । दापयामास दीनारलक्षं तस्य महीपतिः ॥१२२६॥
पुनर्ब्रूहीति भूपोक्ते मुदितो याचकस्तदा । चमत्कारकरं प्राह वहुश्रुतकथानकम् ॥१२२७॥
"सग्रहेण कुलीनानां राज्य कुर्वन्ति पार्थिवाः । आदिमध्यावसाने च न ते यास्यन्ति विक्रियाम् ॥१२२८॥
विशालायां पुरि क्षोणीपतिर्नन्दाभिधोऽभवत् । भार्या भानुमती पुत्र आसीद्विजयपालकः ॥१२२९॥ [वहुश्रुतकथानकम्]
मन्त्री वहुश्रुतो नाम्ना सर्वनीतिविशारदः । नानाशास्त्ररहस्यज्ञः शारदानन्दनो गुरुः ॥१२३०॥
भूप भानुमती पार्श्वे स्थापयन्तं सभान्तरे । भानुमत्याः प्रतिच्छन्दरूपान्मन्त्री न्यपेधयत् ॥१२३१॥
"वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियंवदाः । शरीरधर्मकोशेभ्यः क्षिप्रं स परिहीयते" ॥१२३२॥
नृपः प्राह भो मन्त्रिन्! साधु त्वयोदितं परम् । अहमेनां विनाऽत्रैव स्थातु शक्नोमि नो मनाक् ॥१२३३॥
मन्त्री प्राह विभो! तर्हि रूप पट्टगत खलु । कारयित्वा समीपे स सभायां स्थाप्यते ततः ॥१२३४॥
अथ भूपेन चित्रामकरस्य दर्शितं हि तत् । तदनुमानात्तेनैव तद्रूपं लिखित वरम् ॥१२३५॥

॥ ९३ ॥

"अत्यासक्ता विरक्ता यद् दूरस्था न फलप्रदाः । सेव्या मध्यमभावेन राजा वह्नि–गुरु–स्त्रियः" ॥१२३६॥
शारदानन्दनायाथ पत्न्या रूपं प्रदर्शितम् । गुरुः प्रोवाच नो रूपे गुप्तस्थं तिलकं कृतम् ॥१२४७॥
३ रुष्टो राजा बहुश्रुतमन्त्रिपार्श्वाद्रहो गुरुम् । हननायार्पयामासास्थाप(य)च्चं स निजालये ॥१२३८॥
मृगयायां गतोऽन्येद्युः सूनुर्विजयपालकः । अशिक्षिताश्वमारूढो मृगपृष्ठे वनेऽचलत् ॥१२३९॥
स्वसेवकेऽखिले दृष्टिपथातीते नृपाङ्गभूः । आगच्छन्तं हरिं वीक्ष्यारुरोह भयतस्तरुम् ॥१२४०॥
६ तत्रस्थो वानरः प्राह कुमार कुरु मा भयं । किं करिष्यत्ययं व्याघ्रोऽत्रस्थयोरावयोः खलु ॥१२४१॥
कुमार–वानरौ मैत्रीभावं प्राप्तौ तरौ स्थितौ । व्याघ्रस्तु पादपस्याधः स्थितस्तौ जग्धुमिच्छति ॥१२४२॥
शयालुं भूमिभुक्पुत्रं स्वाङ्के सुप्तं विधाय च । यावत्कपिः स्थितस्तावद् व्याघ्र एवं जगौ स्फुटम् ॥१२४३॥
९ भो कपे ! मे बुभुक्षाऽस्ति तेनामुं भूपनन्दनम् । मुञ्चाधोऽहं बुभुक्षित्वा भविष्याम्याशितंभवः ॥१२४४॥
वानरोऽवग् न ददे तुभ्यं स्वाश्रितं नृपनन्दनम् । व्याघ्रः प्राह विना भक्ष्यं मरिष्यामीति शीघ्रतः ॥१२४५॥
बुद्धोऽथ क्षितिभुक्पुत्रः शयालुं वानरं तदा । स्वांके कृत्वा स्थितो यावत्तावद् व्याघ्रो जगावदः ॥१२४६॥
१२ भूपाङ्गज ममातीव बुभुक्षा विद्यतेऽधुना । तेनामुं वानरं भक्ष्यं मह्यं दत्त्वा सुखी भव ॥१२४७॥
भुक्त्वाऽमुं वानरं याति व्याघ्रोऽयं स्थानके निजे । ध्यात्वेति भूपभूरङ्कान्मुमोचाधः कपिं तदा ॥१२४८॥
पतन् कपिर्हरेरास्ये हसित्वा त्वरितं तदा । गत्वा मित्रान्तिकेऽतीव रुरोद करुणस्वरम् ॥१२४९॥

व्याघ्रोऽवग् भो कपेऽत्रैतोऽहासीस्त्वं किं भयप्रदे । मित्रोपान्ते गतोऽतीव रोदनं कुरुषे कथम् ॥१२५०॥
कपि प्राहायतोऽमुष्मान्मदीयोऽय सुहृत्तमः । श्वभ्रे यास्यति तेनाहं करोमि रोदन भृशम् ॥१२५१॥
सत्यमेतदिति प्रोक्त्वा व्याघ्रः स्वस्थानकं ययौ । विप्ते मेरेति कपिना पाठितो भूपभूस्तदा ॥१२५२॥
इतश्च भूपपुत्रस्य व्याघ्राद्भीतो तुरङ्गमः । त्रस्तः स्वनगरं गत्वा हेषाशब्दान् करोत्यलम् ॥१२५३॥
अश्वं दृष्ट्वा राजगृहं सकल दुःखपूरितम् । परिवारवृतो राजाऽन्वेषणाय वने गतः ॥१२५४॥
ग्रथिल भूमिभुक्पुत्र वीक्ष्यैता अनुगाः क्रमात् । निन्युर्भूपान्तिके भूपस्ततोऽतिदुःखितोऽजनि ॥१२५५॥
भूयिष्ठेपूपचारेषु कृतेषु कारितेष्वपि । यदा नाभूद् गुणः सूनोस्तदेति भूपतिर्जगौ ॥१२५६॥
शारदानन्दनो नो चेन्मारितोऽत्र मुधा मया । तदाऽधुना द्रुतं सज्जमकरिष्यन्ममाङ्गजम् ॥१२५७॥
ततो भूपोदित प्रोक्तया शारदानन्दनाग्रतः । मन्त्रीशः शारदापुत्रप्रोक्तमेवमचीकथत् ॥१२५८॥
स्वामिन्ममाऽस्ति पुत्र्येका सर्वशास्त्रेषु कोविदा । सैव करिष्यते सज्जं भवत्पुत्रं सुमन्त्रतः ॥१२५९॥
ततः पट्यन्तरे कृत्वा शारदानन्दनं रहः । कन्यावेषधरं मन्त्री तस्थौ भूपादिलोकयुग् ॥१२६०॥
भूपोऽवक् कन्यके! सज्ज कुरुष्व मम नन्दनम् । ततः स गुरुराचष्ट श्लोकानेव पृथक् पृथग् ॥१२६१॥ तथाहि–
"विश्वासप्रतिपन्नाना वञ्चने का विदग्धता । अंकमारुह्य सुप्ताना हन्तुं किं नाम पौरुषम् ॥१२६२॥
सेतु गत्वा समुद्रस्य गङ्गासागरसङ्गमे । ब्रह्महा मुच्यते पापैर्मित्रद्रोही न मुच्यते ॥१२६३॥

॥ ९५ ॥

मित्रद्रोही कृतघ्नश्च स्तेयी विश्वासघातकः । चत्वारो नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥१२६४॥ राजा प्राह-
"ग्रामे वससि हे बाले ! वनस्थं चरितं खलु । व्याघ्रवानरवृत्तानि कथं जानासि बालिके ॥१२६५॥ कन्याऽऽह-
राजंस्त्वं निजपुत्रस्य यदि कल्याणमिच्छसि । देहि दानं सुपात्रेभ्यो गृही दानेन शुद्ध्यति ॥१२६६॥
देवगुरुप्रसादेन जिह्वाग्रे मे सरस्वती । तेनाहं नृप ! जानामि भानुमतीतिलकं यथा ॥१२६७॥
एकैकस्मिंस्तदा श्लोके कथिते भूपतेः पुरः । बालिकावेषभृद्राणीनन्दनेन स्फुटाक्षरम् ॥१२६८॥
एकमेकं तदा मुञ्चन्नक्षरं भूपनन्दनः । स्वस्थीबभूव भूपालश्चमत्कारं व्यधात्पुनः ॥१२६९॥
उत्थाय द्विपटीं पश्चात् कृत्वा यावद्विलोकते । तावद् दृष्ट्वा गुरुं राणीपुत्रं च मुमुदे नृपः ॥१२७०॥
ततो भूपो द्वयोर्मन्त्रि–गुरुराजोर्मुदाऽचिरात् । भूरिलक्ष्मीप्रदानेन प्रीणयामास पूर्ववत् ॥१२७१॥

इति विजयपाल–बहुश्रुतकथानकम् ।

बहुश्रुतकथां श्रुत्वा भूप आश्चर्यकारिणीम् । दापयामास दीनारकोटिं तस्मै नराधिपः ॥१२७२॥
कोशाध्यक्षं समाकार्य प्रोवाचेति महीपतिः । एतत्त्वया प्रदातव्यमर्थिने मन्निदेशतः ॥१२७३॥ तथाहि–
"आर्ते दर्शनमागते दशशती संभाषिते चायुतम्, यद्वाचा च हसेयमाशु भवता लक्षोऽस्य विश्राण्यताम् ।
निष्काणां परितोषके मम पुनः कोटिं मदाज्ञा परा, कोशाधीश ! सदेति विक्रमनृपश्चक्रे वदान्यस्थितिम् ॥१२७४॥
मण्डिते विक्रमार्केण दानपुण्योत्सवेऽन्यदा । निमन्त्रिता जना ऐयुर्भूरिशः स्वस्वदेशतः ॥१२७५॥

उचित-दानम् ।
॥ ९६ ॥

अष्टादशप्रजा राजकरमुक्ता कृता तदा । ककुप्पालाह्वानकृते दक्षा भूपेन चालिताः ॥१२७६॥
श्रीधराह्वो द्विजः सिन्धुदेवाह्वानकृते तदा । प्रेषितो जलधिकूलं गत्वा स्तौतीति त द्रुतम् ॥१२७७॥
"किं ब्रूमो जलधेः श्रिय स हि खलु श्रीजन्मभूमिः स्वयम्, वाच्यः किं महिमाऽपि यस्य हि किल द्वीपं महीति श्रुतिः ।
त्यागः कोऽपि स तस्य बिभ्रति जगद्यस्यार्थिनोऽप्यम्बुदाः, शक्तेः कैव कथाऽपि यस्य भवति क्षोभेण कल्पान्तरम्" ॥
प्रत्यक्षीभूय तुष्टोऽब्धिदेवः प्राहेति सादरम् । दूरस्थोऽपि नृपोऽस्माकमासन्नो विद्यते सदा ॥१२७९॥ यतः–
"सूर्यचन्द्रोदयेऽम्भोजकुमुदे दूरसंस्थिते । प्रतिपन्नसुहृद्भावे तन्वाने प्रमदं क्रमात् ॥१२८०॥
गृहाणेदं वरं रत्नचतुष्कं विक्रमांशवे । अस्मन्मित्राय दातव्यं प्रभावश्चेति कथ्यताम् ॥१२८१॥
आद्यं चित्तेप्सितश्रीदं द्वितीयं भोज्यदं वसु । तृतीयं सैन्यदं तुर्यं सर्वभूषणदायकम् ॥१२८२॥
तान्यादाय द्विजः पश्चात्समेत्य नृपसन्निधौ । मणीन् भूपाय दत्त्वाऽवग् माहात्म्य सागरोदितम् ॥१२८३॥
तानि रत्नानि देदीप्यमानानि वीक्ष्य भूपतिः । हृष्टः प्राह गृहाणैकं रत्नं यद्रोचते तव ॥१२८४॥
विप्रः प्राह कुटुम्बं स्व पृष्ट्वा लास्याम्यहं नृपम् । गत्वा गृहकुटुम्बाग्रे रत्नवार्तां जगौ तदा ॥१२८५॥
पुत्रः प्राह मणिः सैन्यदायी भार्या च भोज्यदः । स्नुषा भूषणदो द्रव्यदायी विप्रश्च लास्यते ॥१२८६॥
मिथस्तेषां कलौ जाते तानि रत्नानि भूभुजे । अर्पयित्वा द्विजेनोक्तः कुटुम्बकलहो निजः ॥१२८७॥
तेषां राज्ञाऽतितुष्टेन चतुर्णामपि तुष्टये । दत्तानि तानि चत्वारि रत्नानि तत्क्षणात् तदा ॥१२८८॥

॥ ९७ ॥

एवं श्रीविक्रमादित्यो ददद्दानं सदाऽर्थिनाम् । विख्यातोऽभूद्वदान्येषु कर्णभूप इवाभितः ॥१२८९॥ इति दाने।
विक्रमार्को जगौ भट्टमात्रं लोकः कथं सुखी । भट्टोऽवग् भूपते! सौम्यविलोचनविलोकनात् ॥१२९०॥
प्रजानां सुखदुःखे च भवेतां नात्र संशयः । विलोक्यते मया ह्येतदित्युक्तं मेदिनीभुजा ॥१२९१॥
प्रसन्नं मानसं कृत्वा लोकस्योपरि तत्क्षणात् । वेषान्तरधरो भूमिपालोऽगादिक्षुवाटके ॥१२९२॥
भूपः प्राहेक्षुवाटस्य स्वामिनीं प्रति दीनवाग् । मातरिक्षुरसं देहि मह्यं तृषितवक्षसे ॥१२९३॥
इक्षुमेकं करे कृत्वा पीडयन्ती मृगेक्षणा । प्राह हस्तं धराधस्त्वं भ्रातरिक्षुरसं पिव ॥१२९४॥
इक्षुरसेन भूपस्य बभारोदरमञ्जसा । एतन्नृपो गृहे गत्वा भट्टमात्रपुरो जगौ ॥१२९५॥
इक्षुवाटपतिर्मे न दत्ते किमपि साम्प्रतम् । तेनेक्षुवाटकं हृत्वा लामीति ध्यातवान्नृपः॥१२९६॥
गत्वेक्षुवाटके भूपः प्राहेक्षुवाटकेश्वरीम् । देहि इक्षुरसं श्राक् त्वं मह्यं तृषितवक्षसे ॥१२९७॥
एकमिक्षुं करे कृत्वा मर्दयन्ती मृगेक्षणा । प्राह हस्तं धराधस्त्वं भ्रातरिक्षुरसं पिव ॥१२९८॥
पिडितेष्विक्षुदण्डेषु भूयस्सु च तदा तया । निस्ससार छटा नैका ततोऽवग् विक्रमार्यमा ॥१२९९॥
मातः! कल्ये मया भूरिः पीतो नेति कुतोऽधुना । नारी प्राह महीशस्य कल्ये दृष्टिर्वराऽभवत् ॥१३००॥
अद्य तस्याजनि क्रूरा दृष्टिर्भूमीपतेर्ननु । एतन्नृपो गृहे गत्वा भट्टमात्रपुरो जगौ ॥१३०१॥
भट्टमात्रो जगौ राजन्! दृष्टं दृक्सौम्यचेष्टितम् । राजा प्रोवाच ते सत्यं भट्टमात्र! वचः स्फुटम् ॥१३०२॥



नृपस्य सौम्यदृष्ट्या प्रजानां सुखम्।

॥ ९८ ॥

राजा प्रोवाच मे कावाडिकाना मारणे मनः । भट्टमात्रो जगावेव तेषामपि भविष्यति ॥१३०३

वेषान्तरं ततः कृत्वा भूपो भट्टान्वितो बहिः । प्रेक्ष्य कावाडिकं प्राह विक्रमार्कोऽधुना मृतः ॥१३०४॥

कावाडिका जगुः सुष्ठु जात भूपे मृतिं गते । इन्धनानि लभिष्यन्तेऽस्माक मूल्यं बहु स्फुटम् ॥१३०५॥

श्रुत्वैतद्विक्रमादित्यः प्रोवाचेति तदग्रतः । आभीरीपूजने चित्तं साम्मतं विद्यते मम ॥१३०६॥

भट्टमात्रो जगावेव तासामपि तथाऽस्ति हि । विक्रमार्कयुतो भट्टमात्रः पुर्या बहिर्गतः ॥१३०७॥

प्राहेत्याभीरिकां वीक्ष्य विक्रमार्कोऽधुना मृतः । श्रुत्वैतद्घोरसामत्र भङ्क्त्वा रौति स्म सा तदा ॥१३०८॥

हा वत्स विक्रमादित्य हा कारुण्यमहोदधे । क्व गतोऽसि कथं पृथ्वी त्वा विनाऽत्र भविष्यति ॥१३०९॥

इत्यादिरोदनपरा प्रकटीभूय तां नृपः । नीत्वा स्वसदनं लक्ष्म्या मानयामास सादरम् ॥१३१०॥

प्राप्य भूमीपतेः पार्श्वात् वह्वी लक्ष्मी तदाचिरात् । आभीरी स्वगृहे हृष्टमानसा सम्रुपागमत् ॥१३११॥

ततो विक्रममार्तण्डः सुन्दरन्यायमार्गतः । पालयामास सकला वसुधा विशदाशयः ॥१३१२॥ इति न्यायमार्गे ।

अवन्त्यां विक्रमादित्यः पालयन् पृथिवी नयात् । दानशीलतपश्चारुभावनाः कुरुते सदा ॥१३१३॥

निशायामेकदा लोकस्वरूपं विक्रमार्यमा । निरीक्षितुं पुरीमध्ये वभ्राम छन्नमन्वहम् ॥१३१४॥

एकस्य श्रेष्ठिनो गेहोपरिष्टात्कज्जलध्वजान् । संवीक्ष्य चतुरशीतिं विक्रमो विस्मितोऽभवत् ॥१३१५॥

एवं द्वित्रिदिनेष्वेव भ्रमन् विक्रमभूपतिः । संवीक्ष्य चतुरशीतिदीपांस्तत्र च सिष्मिये ॥१३१६॥

यस्योपरि यादृशं मनस्तस्यापि तादृशम् ।

॥ ९९ ॥

|| १०० ||

किमस्य श्रेष्ठिनो गेहे न न्यूना अधिका न हि । वीक्ष्यन्ते दीपकाः कस्मान्न ज्ञायतेऽत्र कारणम् ॥१३१७॥
मातस्तं श्रेष्ठिनं भूमिपतिराकार्य संसदि । दीपानां करणे हेतुं पप्रच्छ जनसाक्षिकम् ॥३३१८॥
तेनोक्तमेष आचारो गेहे मम महीपते ! । यावन्तः स्वर्णलक्षाः स्युस्तावन्तो दीपकाः खलु ॥१३१९॥
निशीथिन्यां विधीयन्ते गेहोपरि स्फुटं मया । तेन स्वामिंस्त्वया कार्योऽपराधो नो मनाग् मयि ॥१३२०॥
ततो विहस्य भूपालः प्रोवाच श्रेष्ठिनं प्रति । त्वं न कोटीश्वरोऽद्यापि तेन खेदोऽस्ति मे ननु ॥१३२१॥
समाकार्य ततः कोशाध्यक्षान् विक्रमभूपतिः । लक्षं षोडशनिष्काणामर्पयामास तस्य तु ॥१३२२॥ यतः—
"एके सत्पुरुषाः परार्थनिरताः स्वार्थं परित्यज्य ये, सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानवराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये, ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे" ॥१३२३॥
ततः कोटीश्वरो जज्ञे श्रेष्ठी विक्रमभूपतः । विक्रमोऽपि पुरीं वीक्ष्येदृक्षां प्रमुमुदेतराम् ॥१३२४॥
विक्रमादित्यभूपालो जित्वाऽशेषद्विषोऽन्यदा । देशान्निष्कासयामास निजाद् व्यसनसप्तकम् ॥१३२५॥
"द्यूतं च मांसं च सुरा च वेश्या पापर्द्धि-चौरी—परदारसेवा । एतानि सप्त व्यसनानि लोके घोरातिघोरं नरकं नयन्ति" ॥

चौराणां ग्रहणम् । || १०० ||

न नीतिलङ्घनं लोके नैवासत्यप्ररूपणम् । परचक्रागमो नैव प्रजापीडा न कर्हिचित् ॥१३२७॥
देवताप्रतिमाभङ्गो वर्णस्थितिव्यतिक्रमः । पुण्यभङ्गोऽपकीर्तिश्च यस्य देशे न विद्यते ॥१३२८॥
अन्येद्युस्तस्करा लोकं मुष्णन्ति निशि नित्यशः । इभ्यीभूय दिने स्वैरं विलसन्ति पुरान्तरे ॥१३२९॥

स्वर्णहट्ट-मणीहट्ट-वस्त्रहट्टादिनायकाः । एत्य प्रोचुर्नृपोपान्ते धनं स्तेनैर्हृतं बहु ॥१३३०॥
स्तेनान् धर्तुं तलारक्षा मुक्ताः सर्वचतुष्पथे । वीक्षिता अपि न प्राप्तास्ततो दध्याविदं नृपः ॥१३३१॥
सत्यां शक्तौ यदि क्ष्मापः पीड्यमानां प्रजां भृशम् । न रक्षति तदा तस्य नरके पतनं भवेत् ॥१३३२॥ यतः—
"दुर्बलानामनाथानां बाल-वृद्ध-तपस्विनाम् । अन्यायैः परिभूतानां सर्वेषां पार्थिवो गुरुः ॥१३३३॥
लोकेभ्यः करमादाता चौरेभ्यस्तान्न रक्षिता । तदीयैर्लिप्यते राजा पातकैरिति हि स्मृतिः" ॥१३३४॥
ध्यात्वेति भूपती रात्रावेकाकी खड्गसंयुतः । द्रष्टुं चौरं निशीथिन्यां निस्ससार गृहाद् बहिः ॥१३३५॥ यतः—
"सीह सउण न चंदबल न वि जोइ धणरिद्धि । एकल्लउ लक्खिहिं भिडइ जिहां साहस तिहां सिद्धि" ॥१३३६॥
भ्रान्त्वा रहसि माणिक्यचतुष्कान्ते गतो नृपः । दध्यौ चौरादयः प्रायो भवन्त्यत्र चतुष्कके ॥१३३७॥
ततः शनैः शनैर्यावद्गतो रत्नचतुष्कके । तावत् पश्चान्नरान् वीक्ष्यायातो दध्याविदं नृपः ॥१३३८॥
आगच्छन्तस्तलारक्षा मामज्ञात्वा कदाचन । हनिष्यन्ति तदा मे स्याद् गतिः केति रहः स्थितः ॥१३३९॥
आगच्छतः शनैर्दृष्ट्वा चौरा इति व्यधान्नृपः । कृतायां चौरसंज्ञायां भूपेन तस्करैः कृता ॥१३४०॥
चत्वारस्तस्करास्तत्र मिलिता भूपतेर्निशि । भूपः प्राहाधुना यूयं किमर्थं कुत्र यास्यथ ॥१३४१॥
तैरुक्तमत्र मेघस्य श्रेष्ठिनोऽस्माभिरालये । हेरिता रैकुशाः सन्ति विदेशादागता घनाः ॥१३४२॥
तानाहर्तुं गमिष्यामो वयं चौरा धनार्थिनः । त्वं कः कुत्र किमर्थं वा यास्यसीति नृपो जगौ ॥१३४३॥

॥ १०१ ॥

तस्करोऽहं प्रजापालाभिधानो विदितो भुवि । अद्य भूमीपतेः कोशो हेरितोऽस्ति मया खलु ॥१३४४॥
विक्रीय तैलमुद्गादि कष्टाचेषां धनं भवेत् । तेषां श्रीहरणे मृत्युर्जायते निश्चितं द्रुतम् ॥१३४५॥ यतः–
३ "एकैकस्य क्षणं दुःखं मार्यमाणस्य जायते । सपुत्रपौत्रस्य पुनर्यावज्जीवं हृते धने ॥१३४६॥
चौर्यपापद्रुमस्येह वध–बन्धादिकं फलम् । जायते परलोके तु फलं नरकवेदना"॥१३४७॥
सुखेन भूपतेर्लक्ष्मीर्बह्वी भवति सद्मनि । तस्य श्रीहरणे स्तोकं दुःखं भवति निश्चितम् ॥१३४८॥
६ ततश्चौरा जगुः सत्यं प्रोक्तं भो तस्कर त्वया । गम्यते नृपतेर्गेहेऽस्माभिर्हर्तुं घनां श्रियम् ॥१३४९॥
विक्रमोऽवक् चतुर्णां वो भागोऽस्त्यन्यस्य वा पुनः । तैरुक्तं विक्रमार्कस्य व्यवहारोऽस्ति दुःशकः ॥१३५०॥
सेल्लहस्ततलारादिभृत्या विक्रमभूपतेः । राज्ये चौर्यं न कुर्वन्ति शिरश्छेदनभीतितः ॥१३५१॥
९ विक्रमः प्राह युष्माभिः सत्यमुक्तं च साम्प्रतम् । आगमिष्याम्यहं सार्धं भवतां यदि रोचते ॥१३५२॥
तैरुक्तं न हि भागेन महर्घ्या चौरिका भवेत् । आगच्छ त्वं महीशस्य सद्मने गम्यतेऽधुना ॥१३५३॥
विक्रमः प्राह का काऽस्ति शक्तिश्च भवतामिह । आद्येनोक्तं गृहान्तःस्थं वस्तु जानामि गन्धतः ॥१३५४॥
१२ द्वितीयोऽवक् करस्पर्शात् स्फारतालारवादि च । उद्घाटयाम्यहं सद्यो भिनद्मि वाऽञ्जनालवत् ॥१३५५॥
तृतीयोऽवग् मया यस्यैकशः शब्दः श्रुतो मनाक् । वर्षशतेऽपि तं नूनं वाचोपलक्षयाम्यहम् ॥१३५६॥
चतुर्थस्तस्करः प्राह सर्वेषां पशुपक्षिणाम् । भाषां जानामि निनदश्रवणात्तत्क्षणादहम् ॥१३५७॥

तैरुक्त काऽस्ति ते शक्तिर्विक्रमार्को जगौ ततः । येषा मध्येऽस्म्यहं तेषा न भीर्भवति भूपतेः ॥१३५८॥
चौराः प्रोचुर्लसद्भाग्यात्त्व मिलितोऽसि साम्प्रतम् । हरिष्यते महेभ्याना धनं भूरि धनेच्छया ॥१३५९॥
३ दध्यौ विक्रममार्तण्डो हन्म्येतानसिनाऽधुना । पुनश्चिन्तितवानेते हन्यन्ते स्म मुधा कथम् ॥१३६०॥
आदावेषा चरित्रं तु द्रक्ष्यामि गौणवृत्तितः । उपायेन पुनः सौवं कार्यजातं करिष्यते ॥१३६१॥ यतः—
"उपायेन हि तत्कुर्याद्यन्न शक्यं पराक्रमैः । काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥१३६२॥
६ ततो रममतोल्यादि समुल्लङ्घ्य नृपालये । गत्वा तान् तस्करान् भूपः प्रोवाचेति शनैः शनैः ॥१३६३॥
गन्धज्ञानिन् गृहेऽस्मिन् किं विद्यते वद साम्प्रतम् । तेनोक्तं गन्धतो ज्ञात्वा स्फर्द्धकानि च भूरिशः ॥१३६४॥
द्वितीये रजत गेहे तृतीये हेम सद्मनि । चतुर्थे रत्नराशिश्च विद्यते स जगाविति ॥१३६५॥ [युग्मम्]
९ भूपः प्राह ग्रहीष्यन्ते मणयः कोटिमूल्यकाः । तालकभिद् ! द्रुतं भिन्धि तालकं करस्पर्शतः ॥१३६६॥
तेन पश्चात्कृतं पाणिस्पर्शेन तालकं तदा । खात्रं दातुं प्रवृत्तास्ते शिवाशब्दोऽभवद् बहिः ॥१३६७॥
शब्दज्ञानी जगौ वक्ति शिवेयमिति भूरिशः । मध्येऽस्ति धनिकः खात्रं भवद्भिर्दीयते कथम् ॥१३६८॥
१२ ततस्तेषु निवृत्तेषु विक्रमार्को जगावदः । सप्तभौमगृहे भूपाः स्वपन्ति स्म यतः सदा ॥१३६९॥
मुधा वक्ति शिवा रत्नसञ्चयं(यो) गृह्यतां द्रुतम् । शब्दज्ञान्यथवा सम्यग् न वेत्ति शकुनावरम् ॥१३७०॥
खात्र दातु पुनस्तेषु लग्नेषु शब्दविज्जगौ । शिवा वक्ति गृहस्वामीक्षते खात्रं न दीयते ॥१३७१॥

॥ १०३ ॥

आकर्ण्यैतन्निवृत्तेषु तेषु प्राह महीपतिः । अस्मासु विद्यते नैव कश्चिद् गृहपतिर्ध्रुवम् ॥१३७२॥
शिवेयं जल्पति मुधा गृह्यतां रत्नसंचयम् (यः) । पुनस्तेषु प्रवृत्तेषु शब्दज्ञानी जगावदः ॥१३७३॥
शिवा वक्ति शुनि ! क्ष्मापगृहे स्निग्धोदनादिकम् । जग्धं त्वया कथं खात्रदानं न वक्षि भूभुजे ॥१३७४॥
ज्ञातं नीचा भवन्त्येवंविधाः कृतघ्नमानसाः । शुनी प्रोवाच मध्यस्थः स्वामी किं ह्रियते धनम् ॥१३७५॥
ततस्ते चलिताः सर्वे बिभ्यतो यावता द्रुतम् । तावद्विक्रमभूपोऽवग् मध्यस्थोऽस्ति महीपतिः ॥१३७६॥
येषां मध्ये त्वहं तेषां न भीर्भवति भूपतेः । पक्षिणां निनदं मूढा मन्यते न विचक्षणाः ॥१३७७॥
ततस्ते तस्कराः खात्रं दत्त्वा मध्येगृहं गताः । एकैका पञ्चभिः पेटा गृहीता रत्नपूरिता ॥१३७८॥
भूपः प्राह न मध्येऽस्ति स्वामी प्राह मुधा शिवा । अस्माकं पेटिका रत्नपूरिताश्चाटिताः करे ॥१३७९॥
मणिचतुष्ककेऽभ्येत्य गच्छतस्तस्करान् गृहं । भूपोऽवग् मिलनं भूयो बन्धूनां वः कथं भवेत् ॥१३८०॥
तैरुक्तं मिलनं सन्ध्यासमयेऽत्र भविष्यति । भूपः प्राह शतं स्थानेऽत्र प्राप्यन्ते नराः सदा ॥१३८१॥
तेनोपलक्षणं नैव भवत्यत्र चतुष्कके । चौरा जगुः शये येषां बीजपूरा भवन्ति च ॥१३८२॥
ज्ञातव्यास्ते त्वया सौववान्धवा आत्मनः खलु । एवं विधाय संकेतं ययुश्चौरा निजं गृहम् ॥१३८३॥
राजाऽभ्येत्य निजावासे पेटां मुक्त्वा रहस्तदा । सुप्तः प्रगे जजागार वन्दिमङ्गलनिस्वनैः ॥१३८४॥
स्मृतपञ्चनमस्कारः कृतप्राभातिकक्रियः । अलंचकार भूपालः सभां सभ्यसमन्विताम् ॥१३८५॥

चौराणां ग्रहणम् । ॥ १०४ ॥

इतः कोशगृहे कोशाध्यक्षो यावद्ययौ प्रगे । तावत्खात्रं महद् दृष्ट्वा मध्येऽगाद्वीक्षितुं मणीन् ॥१३८६॥
पञ्च पेटा गता ज्ञात्वा दध्यौ भाण्डारिकस्तदा । येन पेटा गृहीताः स्युः स बली विद्यते भृशम् ॥१३८७॥
तेनाह पेटकामेका रहः कृत्वा नृपान्तिके । गत्वा बुम्बारवं कुर्वे पेटागमनपूर्वकम् ॥१३८८॥
रत्नपेटा हृता राज्ञः केनचित् खात्रदानतः । धावन्तु पदिकाः शीघ्रं तलारक्षा भटा अपि ॥१३८९॥
खात्रं दृष्ट्वा तलारक्षैर्भाण्डागारसमन्वितैः । उक्तं भूमिपतेरग्रे षट् ययू रत्नपेटिकाः ॥१३९०॥
राजा प्राह तलारक्ष ! पुररक्षां करोषि न । न त्वं कर्षयसि स्तेनं चोरदण्डस्तदा तव ॥१३९१॥
विलोकिते पुरे नैव लब्धाश्चौराश्च कुत्रचित् । विलक्षः स्वगृहेऽभ्येत्य तलारक्ष उपाविशत् ॥१३९२॥
पत्न्या पृष्टं किमास्यं ते वीक्ष्यते श्यामलं किल । तलारक्षः कथयामास पेटागमनकारणम् ॥१३९३॥
प्रिया प्रोवाच दीनत्वं क्रियते न मनाग् प्रिय । कातरत्वेन नो कार्यसिद्धिर्भवति कर्हिचित् ॥१३९४॥ यत –
"सदाचारस्य धीरस्य धर्मतो दीर्घदर्शिनः । न्यायप्रवृत्तस्य सतः सन्तु वा यान्तु वा श्रियः ॥१३९५॥
एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥१३९६॥
अतीतं नैव शोचन्ति भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः" ॥१३९७॥
मुष्णन्ति सततं चौरा नगरं निर्दयाशयाः । भूप एवंविधो जातो दुष्टवाक्यप्रजल्पनात् ॥१३९८॥ यतः–
"काके शौचं द्यूतकारे च सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः। क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा"॥

॥ १०५ ॥

आत्मगेहरमाः सर्वा अर्पयित्वा महीपतेः । कथ्यतेऽहं गमिष्याम्यन्यत्र चाजीविकाकृते ॥१४००॥
भवानेवंविधोऽभूस्त्वं भृत्यस्योपरि सम्प्रति । तेन स्थातुं न शक्येतास्माभिरत्र तवान्तिके ॥१४०१॥
विचार्यैतत्तलारक्षोऽभ्येत्य भूपान्तिके जगौ । स्वामिन्नहं गमिष्याम्यन्यत्र त्वं चेदृशोऽभवः ॥१४०२॥
भूपः प्राह तलारक्ष न भेतव्यं त्वया मनाग् । चौराश्चटन्तु वा मा वा पाणौ मुष्णन्तु वा पुरम् ॥१४०३॥
तलारक्षाऽधुना स्वस्थ गच्छेर्मणिचतुष्कके । बीजपूरयुता ये स्युरत्रानेयास्त्वया च ते ॥१४०४॥
आदेशं भूपतेः प्राप्य तलारक्षः प्रमोदितः । निःसृतो नृपतेः कार्यं कर्तुं मणिचतुष्कके ॥१४०५ यतः—
" सती पत्युः प्रभोः पत्तिर्गुरोः शिष्यः पितुः सुतः । आदेशे संशयं कुर्वन् खण्डयत्यात्मनो व्रतम् "॥१४०६॥
इतस्तत्रागताश्चौरा वन्धोः पश्यन्ति वर्त्म च । शब्दज्ञानी शिवारावं श्रुत्वा चावग् तदाऽग्रतः ॥१४०७॥
शिवा वक्ति द्रुतं यूयं नश्यतेतः प्रदेशतः । आयाति (न्ति) नाहरा धर्तुं युष्माकमत्र सम्प्रति ॥१४०८॥
प्रोचुस्तेनाक्षयो मौनं कुरुष्व त्वं च बान्धव ! । पूर्वं कृतं वचस्ते चेत् रत्नपेटास्तदा कुतः ॥१४०९॥
गम्यते चेत्तदा तादृग्बन्धोर्योगः कथं भवेत् । विमृश्येति स्थितास्तस्य पश्यन्तो वर्त्म हर्षिताः ॥१४१०॥
एत्य तत्र तलारक्षो बीजपूरसमन्वितान् । तानादाय नृपोपान्ते नेतुं च चलितो यदा ॥१४११॥
तदा स्तेना जगुर्लक्ष्मीं गृहाण भूयसीं मम । अस्मान् मुञ्चाथवा क्रुद्धा आयास्यन्ति नृपान्तिके ॥१४१२॥
तलारोऽवग् नृपेणोक्तं बीजपूरसमन्विताः । आनेतव्या नरा अत्र नियम्य दृढबन्धनैः ॥१४१३॥

आनीता नृपतेः पार्श्वे तलारेण मलिम्लुचाः । राजाऽवग् पेटिका यूयमर्पयन्तु द्रुत मम ॥१४१४॥
नो चेत्करिष्यते चोरदण्डोऽत्र भवतां द्रुतम् । श्रुत्वैतत्तस्करा दध्युरेप वन्धुर्निशातनः ॥१४१५॥
३ मत्वेति पेटिका दत्ताश्चतस्रस्तैर्महीभुजे । भूपोऽवग् भ्रकुटिं कृत्वा वीक्ष्यते पेटिकाद्वयम् ॥१४१६॥
चौराः मोचुश्चतस्रोऽत्र गृहीता नाधिकाः किल । भूपोऽवग् त्वं तलारैतान् शूलायां क्षिप तस्करान् ॥१४१७॥
भूपप्रोक्त तलारक्षः कर्तुं चलति यावता । तावच्छब्दविदा प्रोक्तं स्तेनानां पुरतो रहः ॥१४१८॥
६ रात्रावनेन भूपेनात्मना सार्धं च चौरिकाम् । कुर्वतोक्तमहं येपु स्या तेपा नृपतो न भीः ॥१४१९॥
विमृश्येति तलारक्षं प्रति प्रोचुर्मलिम्लुचाः । नयास्मान् भूपतेः पार्श्वे वयं दद्मश्च पेटिके ॥१४२०॥
आनीतेपु जगो शब्दज्ञानीति भूपसंनिधौ । एकोऽस्माकं नरो रात्रौ स्तैन्यार्थं मिलितो जगौ ॥१४२१॥
९ येपां मध्येऽस्म्यहं तेपां न भीर्भवति भूपतेः । अद्यास्माकं भवेन् मृत्युर्ज्ञायते कारणं न हि ॥१४२२॥
पेटयोर्द्रव्यमूल्यं त गृहाणास्मन्निकेतनात् । राजा रुष्टो नृणां किं किं हरते न धनादिकम् ॥१४२३॥
एका पेटां समानीय भूपेनोक्तमिति स्फुटम् । कोशाध्यक्ष! द्वितीयां त्वं मणिपेटां समानय ॥१४२४॥
१२ मार्यमाणो महीशेन बिभ्यन् कोशाधिपस्तदा । रत्नपेटां ददौ भूमीभुजे दूनमना द्रुतम् ॥१४२५॥
राजाऽवग् वान्धवा यूयं मम सत्या बभूविथ (व च) । सार्धं वा चौर्यकरणाद्भेतव्यं न मनागपि ॥१४२६॥
भवता संनिधावेकं मार्गयाम्यधुनाहकम् । ते प्रोचुर्भूपते चौर्यं मुक्त्वैकं मार्गयाधुना ॥१४२७॥

॥ १०७ ॥

राजाऽवक् चौर्यतो जीवा भवन्त्यत्र परत्र च । दुःखभाजो भृशं भूयो भ्रमन्ति भवकानने ॥१४२८॥ यतः–
“अयं लोकः परो लोको धर्मो धैर्यं धृतिः मतिः । मुष्णता परकीयं स्वं मुषितं सर्वमप्यदः” ॥१४२९॥
सम्बन्ध्यपि निगृह्णीत चौर्यान्मंडिकवन्नृपैः । चौरोऽपि त्यक्तचौर्यः स्यात् स्वर्गभाग् रौहिणेयवत् ॥१४३०॥
ततस्तैस्तस्करैश्चौर्यकरणे नियमस्तदा । गृहीतो भूपतः पार्श्वे बभूवुः सुखिनश्च ते ॥१४३१॥
तस्करैर्नियमे स्तैन्ये गृहीते भूपसंनिधौ । अवन्तीवासिनो लोका बभूवुः सुखिनो भृशम् ॥१४३२॥
चौरेभ्यस्त्यक्तचौर्येभ्यो ग्रामाणां शतपञ्चकम् । सन्मानपूर्वकं भूपो दत्ते स्म मुदिताशयः ॥१४३३॥

इति श्रीमत्तपागच्छनायक–श्रीसोमसुन्दरसूरिपट्टालङ्करणश्रीमुनिसुन्दरसूरि–शिष्यप०–
शुभशीलगणिविरचिते विक्रमादित्यविक्रमचरित्रचरिते श्रीशत्रुञ्जयोद्धार–
करणस्वरूपवर्णनो नामाष्टमः सर्गः समाप्तः ॥

---

# अथ नवमः सर्गः।

[ पञ्चदण्डच्छत्रकथा ]

अन्येद्युर्विक्रमादित्यः क्रीडां कृत्वा वहिर्वने। आगच्छन् स्वगृहे राजमार्गे गान्छिकपाटके ॥१॥
तत्रैव पाटके नागदमन्यास्तनयाऽनधा। देवदमन्यभिधा वाला विद्यते रूपशालिनी ॥२॥
निरीक्ष्य गान्छिकाचेटीं मार्जयन्तीं नृपानुगाः। प्रोचुर्भूपतिरायाति धूलिं प्रोच्छारयाधुना ॥३॥
श्रुत्वैतद्वचनं देवदमनी प्राह किं नृपः। पञ्चदण्डमयं छत्रं धत्ते स्म निजमस्तके ॥४॥
तदेतद्वचन तस्या आकर्ण्य चलितो नृपः। पञ्चदण्डस्य वृत्तान्तं प्रष्टुकामोऽभवत् भृशम् ॥५॥ यतः—
"अपूर्वामश्रुतां वार्तां समाकर्ण्य जनो द्रुतम्। श्रोतुकामो भवेद् बाढं शून्यचित्त इवानिशम्" ॥६॥
प्रष्टुकामोऽपि भूपालो गत्वा निजनिकेतने। कृत्वा देवार्चनां चाशु बुभुजे विक्रमार्यमा ॥७॥
तामाकारयितुं भृत्याः प्रेषिता भूभुजा गृहात्। गान्छिकालयमभ्येत्य जगदुस्तामिति स्फुटम् ॥८॥
भो गान्छिके! च ते पुत्री वक्ति भूपं यथा तथा। तेन तां भूपतेः पार्श्वे प्रेषयाधिकजल्पिकाम् ॥९॥
गान्छिका च जगादैवं चेत्कुप्यति क्षमापतिः। तदा लोकाः कथंकारं प्रजल्पिष्यन्ति साम्प्रतम् ॥१०॥ यतः—
"यथा तथा नृणां वाक्यमाकर्ण्य कर्णदुर्वलाः। ये भवन्ति नृपास्तेषां देशो वसति नो मनाग्" ॥११॥

लोकानां वचनं श्रुत्वा महीपाला यथा तथा । अपत्यानामिव श्राग् नो रुष्यन्ति मातृपितृवत् ॥१२॥
भूपानुगा जगू राजा नास्या दण्डं करिष्यति । किं तु मक्ष्यति वृत्तान्तं पञ्चदण्डस्य किंचन ॥१३॥
प्रोवाच गञ्छिका विद्या न कदा विनयं विना । प्राप्यते मनुजैर्भूप इति विज्ञप्यतां द्रुतम् ॥१४॥ यतः—
"विनयेन विद्या ग्राह्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या तुर्योपायो न विद्यते" ॥१५॥
भृत्याः प्रोचुः सुतां स्वीयां प्रेषय त्वं नृपान्तिके । गञ्छिकाऽऽहाहमेष्यामि तैरुक्तमस्त्विवति स्फुटम् ॥१६॥
गञ्छिका भूपतेः पार्श्वे गत्वा प्राहेत्यदः स्फुटम् । यथा तथा वचो बालादिभिर्मौढ्यान्निगद्यते ॥१७॥
आकर्ण्यैतन्नृपः कुप्येद् यदि नः का गतिस्तदा । भूपोऽवग् नैव बालानां वाक्यैः कोपो भवेन्मम ॥१८॥
प्रष्टुकामोऽस्म्यहं पञ्चदण्डच्छत्रस्वरूपकम् । तेन त्वं तस्य छत्रस्य स्वरूपं वद किञ्चन ॥१९॥
गाञ्छिका प्राह भो भूप ! कार्यं चेद्विद्यते तव । तदा त्वं प्रथमं मामकीन—त्वत्सदनान्तरे ॥२०॥
संलग्नां पद्यकां चार्वीं कारयित्वा धनैर्घनैः । मत्सुतां सारिपाशेन त्रिर्वारं लघुलाघवात् ॥२१॥
विजित्य परिणीयाशु पुत्र्या विनयपूर्वकम् । सद्यो विक्रमभूपाल ! पश्चादेशान् कारिष्यासि ॥२२॥
तदा मम सुताऽहं वा छत्रस्योत्पत्तिमञ्जसा । आमूलचूलतस्तुभ्यं वदिष्याम्यवनीपते ! ॥२३॥
राजा जगाद नास्माभिः पञ्चदण्डं कदाचन । छत्रं श्रुतं क्वचिद् दृष्टं भूर्भुवःस्वस्त्रये ननु ॥२४॥
तथापि प्रेष्यतां पुत्री भवत्योक्तं करिष्यते । प्रोक्तेति नागदमनी जगाम निजमन्दिरम् ॥२५॥

ततस्ते मनुजा धन्यगेहे सत्या महोत्सवम् । कर्तुं चेयुर्लसद्वाद्यनादनादैतपूर्वकम् ॥४४६॥
क्षीरेयीं खण्डसयुक्ता वर्यामेकन भाजने । अत्तुं धन्यमिया सत्र उपविष्टा मुदा तदा ॥४४७॥
भुक्त्वा धन्यमिया सप्तक्षेत्र्या सर्व धन निजम् । व्ययित्वाऽऽराधना चक्रे दशधा गुरुसाक्षिकम् ॥४४८॥
प्रणम्य श्रीजिन लोकान् क्षमयित्वाऽश्वगेहिनीम् । आरुह्य चलिता राजमार्गे धन्यस्य गेहिनी ॥४४९॥
वाद्यमानेषु वाद्येषु कार्यं मुक्त्वा निज निजम् । नरा नार्यः समाजग्मुर्धन्यपत्नीं निरीक्षितुम् ॥४५०॥
अहमहमिकापूर्वं वितीर्णा अक्षतास्तया । गृह्यन्ते नरनारीभिरपत्यप्राप्तिहेतवे ॥४५१॥
क्रमात्प्राप्ता सती कुले रेवायाः सरितोपरि । यत्रास्ति माणिभद्रस्य चेटकस्य निकेतनम् ॥४५२॥
उत्तीर्य घोटिकायाः सा दत्त्वाऽर्थिभ्यो धन बहु। चितोपान्त समायाता धन्यस्य गेहिनी मुदा ॥४५३॥
इतस्तत्रागतो भूपो भूरिभृत्यसमन्वितः । सत्या महोत्सवं चारु कारयामास मानवैः ॥३५४॥
तदा धन्यमियाऽऽचष्ट राजन् ! जीव चिर जय । चिर पालय भूपीठ धर्मे कुरु रुचिं चिरम् ॥४५५॥
उपकार यथा पूर्वं कुरुषे सर्वदेहिनाम् । तथा कुर्वन् चिर पुत्रपौत्रयुक्तो भव क्रमात् ॥४५६॥
शृङ्गारसुन्दरी राज्ञी तत्रेत्य तां भतीतराम् । प्रणम्य याचते पादोदक पुत्रार्थमात्मनः ॥४५७॥
लाजमुष्टिं सती दत्त्वा भूपपत्नी जगाविति । पुत्रपौत्रैः प्रपौत्रैश्च पत्या युक्ता चिरं जय ॥४५८॥
ततो राजा रहः प्रष्टु सत्याः कर्णान्तिके स्थितः । जगौ त्रिकालवेत्री त्व विद्याराजगतीहिता ॥४५९॥

॥ २३९ ॥

शीलप्रभावतो दत्से त्वमपत्यानि देहिनाम् । त्वदंह्रिक्षालनाम्भोभिर्यान्ति रोगा नृणां क्षयम् ॥४६०॥
रात्रावद्य पतिघ्नी त्वं गलेऽङ्गुष्ठप्रदानतः । अन्यपुंभोगकर्तृत्वं वाञ्छन्तीति विचिन्तय ॥४६१॥
३ स्तेनभोगसुखाकाङ्क्षां मुक्त्वा तव सुखं कथम् । अग्निप्रवेशतो धन्यपत्नि ! मृत्युं कथं कुरु ॥४६२॥
नव्यं पतिं विधाय त्वं कृतार्थय स्वयौवनम् । मृतैर्जीवैर्न छुट्येत कृतदुष्कर्मतः क्वचित् ॥४६३॥
अधुना क्रियते काष्ठभक्षणं भामिनि ! त्वया । रात्रौ च परिणीतस्य कान्तस्य हननं कृतम् ॥४६४॥
६ स्त्रीवृत्तत्वं विमुच्याशु तथ्यं कथ्यं ममाग्रतः । मया न वक्ष्यते वृत्तं कस्याग्रे तव निश्चितम् ॥४६५॥
ततः स्वं चरितं राज्ञा ज्ञातं मत्वा निशाभवम् । धन्यपत्नी जगौ भूप ! मा पृच्छ मम सन्निधौ ॥४६६॥
यथा च वर्तते कालो वर्तते च यथा जनः । अग्रे वह्निं ज्वलन्तं न पश्यति क्षोणीभृत्स्थितम् ॥४६७॥ उक्तं च–
९ "राईसरिसवमित्ताणि परछिद्दाणि अ पाससे । अप्पणो बिल्लमित्ताणि पिच्छंतो न वि पाससे ॥४६८॥
हरिहरादयो देवा मुनयः कपिलादयः । मानवाश्चक्रवर्त्याद्या योषितां किंकरा इमे ॥४६९॥
अनिन्द्या गुरवो गावः काञ्चनं सलिलं स्त्रियः । पृथिवीं च षडेतानि यो निन्दति स निग्रते ॥४७०॥ अम्बप्लुतं०॥"
१२ यदीच्छसि नितम्बिन्यां ज्ञातुं चरितमत्र तु । सन्तापस्ते तदाऽत्यन्तं भविष्यत्यसुखप्रदः ॥४७१॥
अग्रे विगोपितोऽसि त्वं गांछयादेशप्रदानतः । विगुपप्यस्यधुना पृच्छन् स्त्रीवृत्तं मम पार्श्वतः ॥४७२॥
बिले बिले त्वया गोधा दृष्टा गोणसमूषकाः । दृग्विषोऽहिर्न दृष्टोऽस्ति यो दृष्टो जीवितापहः ॥४७३॥



स्त्रीचरित्रविषये रत्नमञ्जरीकथा।

शुक्तिशङ्खकपर्दाश्च सागर भ्रमता त्वया । विलोकिता विशेपज्ञा न दृष्टः कौस्तुभो मणिः ॥४७४॥
ककाद्द–लिंब–कयेरि–करीर–कनकद्रुमाः । त्वया दृष्टा घना राजन् ! न दृष्टाः कल्पपादपाः ॥४७५॥
३ रि(ऋ)णभूर्विपभूः क्रूरा मरुभूमिर्विलोकिता । रत्नमुक्तान्विता भूमिर्न दृष्टा भवता क्वचित् ॥४७६॥
नाथमाऽह जडा नाह नापि स्त्रीपु शिरोमणिः । स्वयशो भूतले मुक्त्वा गमिष्यामि सुरालये ॥४७७॥
राजाऽऽचष्ट तथापि त्वं किचित् स्त्रीचरित वद । धन्यमिया जगौ कोची कुन्द पृच्छ पुरान्तरे ॥४७८॥
६ कोची कान्दविका वेत्ति ममान्यासा च योपिताम् । चरित तेन ता पृच्छावन्तीपुर्यान्तरस्थिताम् ॥४७९॥
कल्याण भवतात्तुभ्य मिथ्या दुष्कृतमस्तु मे । इत्युक्त्वा सा चितामध्ये मविष्टा नृद्वयान्विता ॥४८०॥
पुरीलोकादिसयुक्तो भूपोऽगात्स्वपुरान्तरे । भस्मीभूय ययौ धन्यपत्नी स्वर्गं स्वमृत्युतः ॥४८१॥
९ भूपोऽन्येद्युः स्त्रिया वृत्त मष्टुकामः कृतत्वरः । कोचीकान्दविकापार्श्वे यातु गेहाद्विनिर्ययौ ॥४८२॥
गत्वा चतुष्पथे कन्दुपाटकं लोकपार्श्वतः । पमच्छ भूपतिः क्वास्ति यत्रादन्ति च मार्गगाः ॥४८३॥ यतः–
"वर्यपक्वान्नसम्मिश्रा शालिदालिघृतप्लुता । शाकपाकादिसयुक्ता दधिदुग्धादिपूरिता ॥४८४॥
१२ अस्ति रसवती मायो लभ्यते द्रव्यदानतः । निर्द्रव्यास्तु पुनः स्वल्पद्रव्यदानाच्च मध्यमाः ॥४८५॥ [युग्मम्]
ततो लोका जगुर्गच्छ यथाऽस्मिन् वामतः पथि । सत्रागारो वहन्नस्ति कोचीकान्दविकागृहे ॥४८६॥
चन्द्रार्कमणिसघातनिर्मिता गृहसन्ततिः । एक-द्वि-त्रि-चतुः-पञ्च-पट्-सप्तभूमिसुन्दरा ॥४८७॥

॥ २४१ ॥

गच्छन्ती विद्यते व्योम्नि मिलितुं चन्द्रसूर्ययोः । स्वमित्रयोर्मुदा तत्र पाटके चित्तमाददे ॥४८८॥
पञ्चवर्णमणिवद्धे यत्र प्राङ्गणभूतले । आदर्श इव वीक्षन्ते लोकाः स्वं प्रतिविम्बितम् ॥४८९॥
तत्र द्राक्षासुधामृष्टवारिपूर्णा मनोहराः । वाप्यो गृहे गृहे सन्ति सुखसोपानसुन्दराः ॥४९०॥
सदापुष्पफलाश्चाम्रमाकन्दादिकपादपाः । सन्ति गृहे गृहे यत्र प्रीणयन्तो जनव्रजम् ॥४९१॥
कोचीकान्दविकागेहं स्वर्णमाणिक्यतोरणम् । भाति ध्वजपताकाभिश्चलन्तीभिश्च लीलया ॥४९२॥
यत्रार्थिभ्योऽनिशं दानं ददाना मार्गितं खलु । प्रत्यक्षा कल्पवल्लीव कोचीकान्दुविकाऽस्ति च ॥४९३॥
भोगार्थी लभते भोगं भोज्यार्थी भोजनं पुनः । पुत्रार्थी लभते पुत्रं तत्र तस्याः समीपतः ॥४९४॥
विद्याधरैर्नरैरिद्धैः किंनरैर्व्यन्तरामरैः । ज्योतिष्कैर्मानवैर्नित्यं सेव्यते सा शुभंकरा ॥४९५॥
रुष्टा रौद्रोपमाकारा सन्तुष्टाऽभीष्टदायका । तस्या आस्यावलोकश्च पुण्यैरेव च लभ्यते ॥४९६॥
ततो रूपं परावृत्य चमत्कृतमना नृपः । कोचीकान्दुविकागेहद्वारदेशं समागमत् ॥४९७॥
अनेकद्वाररोचिष्णु नानालोकसमन्वितम् । पञ्चशब्दादिनिर्घोषं वाद्यगानमनोहरम् ॥४९८॥
स्वर्विमानसमं वर्यं नारीशतसमाकुलम् । कोचीकान्दुविकागेहं दृष्ट्वा भूपो मुदं दधौ ॥४९९॥ [युग्मम्]
अदृश्यरूपभृद् भूपो गत्वा मध्येगृहं तदा । कोचीं स्वर्णासनासीनां वीज्यमानां सुचामरैः ॥५००॥
सेव्यमानां सखीवृन्दैः स्तूयमानां च याचकैः । रतिप्रीतिसमश्रीकां दृष्ट्वेति ध्यातवान् हृदि ॥५०१॥ [युग्मम्]

कि शची कि सुरी किं वा किन्नरी कि सुरप्रिया । कि पातालकुमार्येषा समागान्मे पुरेऽधुना ॥५०२॥
वैदेशिक समायान्त मत्वा दासी तदीयका । नीत्वा मज्जनगेहान्तः स्नानपीठे न्यवीविशत् ॥५०३॥
कोटिपाकादिभिस्तैलैर्मर्दितो मेदिनीपतिः । कस्तूरीमुख्यपानीयैः स्नान च कारितस्तया ॥५०४॥
ततः श्रीविक्रमादित्यः कृत्वा वैदेशिक वपुः । यावत्तस्थौ तदा कोचीसखीभिर्वीक्षितो नृपः ॥५०५॥
भोजनस्थानके नीत्वा दासी प्राहादन कुरु । राजा जगौ मया रात्रौ भोजन क्रियते नहि ॥५०६॥ उक्त च–
"न भोक्तव्य न भोक्तव्यं रात्रावत्र युधिष्ठिर ! । तपस्विना विशेषेण गृहिणा च विवेकिना ॥५०७॥
ये रात्रौ सर्वदाऽऽहार वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य फल मासेन जायते" ॥५०८॥
इति ज्ञात्वा मया रात्रौ भोजन न विधीयते । प्रत्याख्यान द्विधाऽऽहारं कृत सति दिवाकरे ॥५०९॥
ताम्बूल-चन्दनालेप-पुष्पप्रकरशोभितः । तया नीतो महीपालः कोचीकान्दविकान्तिके ॥५१०॥
नतिं स कुरुते यावत्तस्याः सुविनयं नृपः । तावत्तयोदित नाम्ना विक्रमार्क नृपानज ॥५११॥
प्रजाः पालयतो न्यायमार्गाच्च निरन्तरम् । कुशल विद्यतेऽत्र त्व किमर्थमागतो वद ॥५१२॥
वत्पुरी सुन्दरी देवदमनी शीलशालिनी । विद्यते या प्रिया ते सा समस्ति शुभसयुता ॥५१३॥
स्वकार्यं सर्वलोकानामिष्ट नान्यस्य कस्यचित् । त्वमप्यगाः स्वकार्यार्थी छेत्तु वा सशय स्वकम् ॥५१४॥
यया पत्या सम वह्नौ प्रवेशो विहितः स्त्रिया । सा रत्नमञ्जरी धन्या सतीरत्नमभूद्वरम् ॥५१५॥

॥ २४३ ॥

स्त्रीचरित्रविषये राज्ञीचरित्रवीक्षणम् ।

परं कल्ये कुकर्मोत्थपापरक्षोतिवाहिता । रेमे सार्धं च चौरेण हत्वाऽऽत्मीयं रहः पतिम् ॥५१६॥
रतेनकान्तौ मृतौ ज्ञात्वा पश्चात्तापसमन्विता । निन्दन्ती स्वं कृतं कर्म सा व्यधाद्वह्निवेशनम् ॥५१७॥ यतः—
"क्षणं सक्तः क्षणं मुक्तः क्षणं क्रुद्धः क्षणं क्षमी । मोहाद्यैः क्रीडयेवाहं कारितः कपिचापलम्" ॥५१८॥
प्रविशन्त्या तया वह्नौ यदुक्तं भवतः पुरः । पश्यसि त्वं गिरौ वह्निं ज्वलन्तं न पदोस्तले ॥५१९॥
तत्सत्यं गदितं धन्यप्रियया तटिनीतटे । स्वयमेव न मञ्जर्या द्रष्टव्यं चरितं रहः ॥५२०॥ यतः—

"शास्त्रं सुनिश्चलधिया परिचिन्तनीय—माराधितोऽपि नृपतिः परिशङ्कनीयः ।
अङ्कस्थिताऽपि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतः स्थिरत्वम्" ॥५२१॥

प्राप्यते पारमम्भोधेः कदाचित्तारकैरिह । न स्वभावो मृगाक्षीणां लभ्यते कौविदैरिह ॥५२२॥
स्त्रीवृत्तवीक्षणे वाञ्छा यद्यस्ति तव साम्प्रतम् । तदाऽस्यां च पेटायां मध्ये तिष्ठ रहः शनैः ॥५२३॥
खा(का)स—श्वासौ त्वया नोच्यौ(च्चैः) मनाक् कार्यौ नरेश्वर ! । यत्रेतीयं तु मञ्जूषा गम्यं तत्र त्वया रहः ॥५२४॥
यदा च त्वां च पेटायाः कर्षयामि बहिः खलु । तदा त्वया महीपाल ! निर्गम्यं वाञ्छता हितम् ॥५२५॥
मञ्जूषान्तस्ततो भूपः प्रविष्टो यावता शनैः । तावत्तत्रागतो बुद्धिसागरो मन्त्रिशेखरः ॥५२६॥
पञ्चमुद्राधरो देशस्वामी भूपतिवल्लभः । सर्वकर्ता सर्वहर्ता सर्वच्छोटकबन्धकः ॥५२७॥ [युग्मम्]
स्वर्णस्थालं पुरस्तस्या मुक्त्वा नत्वा फलाञ्चितम् । पतित्वा पादयोः प्राह बुद्धिसागरमन्त्रिराट् ॥५२८॥

॥ २४४ ॥

प्रसन्नीभूय मय्येव चिन्तातीतफलप्रदे ! । भोग मदनमञ्जर्या सम कारय मेऽधुना ॥५२९॥
फोची कान्दविका प्राह लात्वैतां लेखनीं शुभ । ऊर्ध्वं चास्या च पेटायामुपाविश विचक्षण ॥५३०॥
पेटायाः परितश्चामुं लेखनीं स्फोरयेस्तदा । यथा व्योम्ना(म्ने)हित स्थानं गमिष्यसि न सशयः ॥५३१॥
फोचीप्रोक्त विधि कृत्वा मन्त्री पेटोपरिस्थितः । ययौ मदनमञ्जर्याः समीपे व्योमवर्त्मना ॥५३२॥
आगत मन्त्रिणं चित्तेहितमीक्ष्य नृपप्रिया । अभ्युत्थायासन दत्त्वोपवेशाय जगावदः ॥५३३॥
बहुभ्यो वासरेभ्यस्त्वमत्रागा मन्त्रिशेखर ! । मन्त्री जगौ मया नित्य नागन्तु शक्यते प्रिये ! ॥५३४॥
राज्यवक् त्वद्वियोगाग्नि ज्वलित मम विग्रहम् । भोगामृतप्रदानेनोपशामयाशु वल्लभ ! ॥५३५॥
अह तवैकचित्ताऽस्मि दूरस्थाऽपि तवान्तिके । त्वत्सौख्ये सुखिता च स्या त्वद्दुःखे दुःखिता पुनः ॥५३६॥ यतः–
"सो दिवसो अप्पमाणो सो मासो मसछेअसारिच्छो । वरिसो विसप्पमाणो घडिआ घडियायसारिच्छा ॥५३७॥
पहरो पहरणसरिसो सा वेला विसवल्लिगहणसमा । सामीअ तुज्झ वियोगे मह जायं एरिस जम्म ॥५३८॥
अज्ज कयत्थो जम्मो अज्ज कयत्थं च जीविअं मज्झ । अज्झ कयत्थो दिवसो सामी तुह संगमेणं मे" ॥५३९॥
मन्त्रिणः कारयामास स्नान मदनमञ्जरी । लक्षकोट्यादिकैः पाकैस्तैलैस्त्वक्सुखकारकैः ॥५४०॥
रसाढ्यैर्विविधैर्भोज्यैर्भोजयामास मन्त्रिणम् । ताम्बूलादि वितीर्याथ सुशय्यास्थानक व्यधात् ॥५४१॥
बहुशृङ्गारभङ्गीभिर्भोगामृतप्रदानतः । प्रीणयामास त राज्ञी कर्णाप्यायकया गिरा ॥५४२॥

॥ २४५ ॥

भुक्त्वा भोगान् निशाशेषे राज्ञी प्राहेति मन्त्रिणम् । विभाता रजनी स्वामिन्! क्षणवच्चावयोरिह ॥५४३॥
ततोऽवग् मन्त्रिराट् स्वौके यास्यामि साम्प्रतं द्रुतम् । कदाचिदेष्यति क्ष्मापस्तदा का गतिरावयोः ॥५४४॥
इति मन्त्रीवचः श्रुत्वा राज्ञी प्राहेति तं प्रति । त्वं स्वं चेतोऽत्र मुक्त्वा मे स्वान्तं लात्वा व्रजाधुना ॥५४५॥
यतोऽहमबला तावकीनस्थिरमनोबलात् । स्थातुं शक्नोमि नो चेच्च मृताऽहं भवता विना ॥५४६॥
आगम्यागम्य भवता त्वरितं त्वरितं निशि । उपशाम्यो ममाङ्गस्थो विप्रयोगविभावसुः ॥५४७॥
त्वया वाच्यः प्रणामो मे लगित्वा पादयोर्दृढम् । कोचीकन्दुविकायास्तु कर्त्र्याः सुमुखमावयोः ॥५४८॥
श्रीविक्रमस्तदा चित्ते चिन्तयामासिवानिति । अहो मदनमञ्जर्याश्चरितं पापकारकम् ॥५४९॥ उक्तं च—
"न प्रतिष्ठा न सौजन्यं न दानं न च गौरवम् । न च स्वान्यहितं वामाः पश्यन्ति मदनान्धलाः ॥५५०॥
निरंकुशा नरे नारी तत्तत् करोत्यसमंजसम् । यत्क्रुद्धाः सिंहशार्दूला व्याला अपि न कुर्वते ॥५५१॥
दूरतस्ताः परित्याज्याः प्रादुर्भावितदुर्मदाः । विश्वोपतापकारिण्यः करिण्य इव योषितः ॥५५२॥
स कोऽपि स्मर्यतां मन्त्रः स कोऽप्युपास्यतां सुरः । न येन स्त्रीपिशाचेयं ग्रसते शीलजीवितम् ॥५५३॥
संपिण्ड्येवाहिदंष्ट्राग्नियमजिह्वाविषाङ्कुरान् । जगज्जिघांसुना नार्यः कृताः क्रूरेण वेधसा ॥५५४॥
यदि स्थिरा भवेद्विद्युत्तिष्ठन्ति यदि वायवः । दैवात्तथापि नारीणां न हि स्थेम मनो भवेत् ॥५५५॥
तदा मन्त्रियुतां पत्नीं उत्तिष्ठन् हन्तुमञ्जसा । भूपो दध्यौ किमेतौ तु हन्मि पापाशयौ द्रुतम् ॥५५६॥



स्त्रीचरित्रविषये राज्ञीचरित्रवीक्षणम् ।

॥ २४६ ॥

अनयोर्हतयोर्लोकापवादो मे भविष्यति । ततो न सर्वथा पाप करोम्येतन्मनागपि ॥५५७॥
ध्यात्वेति नृपतिः स्वीये स्थाने शनैरुपाविशत् । यतो ज्ञः कुरुते पाप निमृश्यैव स्वमानसे ॥५५८॥
ततो मन्त्री निज कार्यं कृत्वा पेटाऽधिरोहणात् । कोचीकन्दुविकापार्श्वे समागाद् व्योमवर्त्मना ॥५५९॥
पेटा सलेखनी दत्त्वा मोक्त्वा राशीनति पुनः । कोचीपादौ प्रणम्याथ मन्त्र्यागान्निजमन्दिरम् ॥५६०॥
कर्पितो भूपतिः पेटामध्यात्तदा तया पुनः । कोच्याः पादौ प्रणम्याथ प्रोवाच मधुरस्वरम् ॥५६१॥
त्वत्प्रसादान्मया ज्ञात राशीटत्तमशेषतः । पर खेदोऽस्ति मे चित्ते स्वपत्नीचरितेक्षणात् ॥५६२॥
कोची प्रोवाच भूप ! स्त्रीचरित विषम खलु । नरेणैकेन नो नारी सन्तोष कुरुते क्वचित् ॥५६३॥ यतः–
“विशिष्टसत्त्वेन विभूषिताङ्गी श्वश्रूयुता पञ्चवरैश्च द्रौपदी । तृप्ति परां नैव गता तदानी श्रीभारतोक्त शृणु राजशेखर ॥
उक्त च भारते शास्त्रे वाक्यपञ्चकमुत्तमम् । नारदेन यथा पृष्ट दुर्वासाह्वऋषेः पुरः ॥५६५॥
द्रौपदी पञ्चवाक्यानि सत्यानि वदते सदा । अकाले चाम्रवृक्षोऽय फलैश्च फलते सदा ॥५६६॥
भर्तारवल्लभत्व च पञ्चानामुपरि स्थितिः । नवनवेच्छासयोगः सतीत्व परदर्शनम् ॥५६७॥
वर्षा कष्टतरः कालो जीवाना हेतुवल्लभः । तेन नारद ! नारीणा भर्ता भर्तेति वल्लभः ॥५६८॥
पञ्चापि मम रोचन्ते पाण्डवाः स्वादसुन्दराः । तथा वली मनो हन्त षष्ठे चेतः प्रजायते ? ॥५६९॥
दृष्ट्वा परनर भार्याभोगेच्छा जायते ध्रुवम् । गावस्तृणमिवारण्ये जिगीषति नव नवम् ॥५७०॥

॥ २४७ ॥

रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद नारीणां सतीत्वमुपजायते ॥५७१॥
सुरूपं पुरुषं दृष्ट्वा भ्रातरं पितरं सुतम् । योनिः क्लिद्यति नारीणामामकुम्भ इवाम्भसा ॥५७२॥
श्रुतकुलपुरुषाणां रक्षणं को विधत्ते, नृपवनवनितानां रक्षणे कोऽप्युपायः ।
अतिविपुलमतिस्त्वं चेतसः पाण्डुदेवः, कथयत तदशेषं प्राज्ञ वः प्राज्ञकीर्ते (?) ॥५७३॥
श्रुतस्य रक्षा सततामियोगः कुलस्य रक्षा पुरुषस्य धर्मः । दानं नृपाणां कुसुमं वनानां स्त्रीणां तु रक्षा नहि जातु जाने ॥
स्पर्शेन्द्रियमहाव्यालग्रस्ता नार्यो नरा अपि । किं न हि कुर्वते कान्तमातृपित्रादिवञ्चकम् ॥५७५॥
स्पर्शेन्द्रियविषव्याप्तो देवः श्रीदेवकीसुतः । गोपिकागर्दभीमुख्यस्त्रीषु किं रमते स्म न ॥५७६॥
ईश्वरोऽपि महादेवः कामेषुविषविह्वलः । तपस्विनीं न किं कामं सिषेवे मेदिनीपतिः ॥५७७॥
ब्रह्माऽपि कामतीव्रेषुविद्धो विह्वलमानसः । ब्राह्म्या स्वसुतया सार्धं न किं रमितवान् नृप ! ॥५७८॥
अहल्यां सेवते स्मेन्द्रो न किं मदनविह्वलः । पराशरादयः किं न ग्रस्ताः कामेन तापसाः ॥५७९॥
नारीणां तु विशेषेण कामो नृभ्योऽधिको भवेत् । तेन नार्यः कथं पत्यैकेन तिष्ठन्ति भूपते ! ॥५८०॥ यतः—
“आहारो द्विगुणः स्त्रीणां लज्जा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः” ॥५८१॥
कोर्चीप्रोक्तं निशम्येति शान्तस्वान्तो नृपो जगौ । यदि स्त्री कामग्रस्तैव कुरुते क्रियते किमु ॥५८२॥
आवर्तः संशयानामविनयभवनं पत्तनं साहसानाम्, दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् ।

स्त्रीचरित्रविषये राज्ञी चरित्रवीक्षणम् ।

अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्ड, स्त्रीयन्त्र केन लोके विषममृतमय धर्मनाशाय सृष्टम् ॥५८३॥
तदा हृष्टमना राजा नत्वा कोचीपदाम्बुजम् । आजगाम निजावास विक्रमार्कमहीपतिः ॥५८४॥
ततस्तां नृपती राज्ञीं मन्त्रीश्वरसमन्विताम् । विससर्ज निजाद् देशाद् दूरे भवस्थिति स्मरन् ॥५८५॥

इति स्त्रीचरित्रवीक्षणसम्बन्धः ॥

स्त्रीचरित्र-विषये छाहड पत्नी कथा॥

प्राप्यते वारिधेः पार कदाचिद्विबुधैर्जनैः । न चेष्टितस्य नारीणा लभ्यते कोविदैः क्वचित् ॥५८६॥
श्रीपुरे छाहडो नाम कौटुम्बिकशिरोमणिः । परिणीन्ये धरापुर्यां पत्नीं रमा धनाङ्गजाम् ॥५८७॥
एकदा छाहडो वर्यवेषो रुचिरयानयुग् । अनयनाय गेहिन्या धरापुर्यां समीयिवान् ॥५८८॥
तत्र श्वश्रूर्लसच्छालिदालिपक्वान्नसर्पिषा । प्रीणयामास सद्भक्त्या पुत्रीपति स्वपुत्रवत् ॥५८९॥
सद्वस्त्रभूषणैस्तत्र छाहडो मानितो भृशम् । प्रिया लात्वा यदा यातुं सज्जोऽभूत्स्वपुरं प्रति ॥५९०॥
परिधाय तदा चारु वस्त्राभरणसञ्चयम् । निर्ययौ स्वजनान् मुत्कलापयितुं रमा गृहात् ॥५९१॥
येन सार्धं सदा भोगान् भुङ्क्ते तत्र पुरे रमा । स जनो मिलितो मार्गे प्राहेति तां प्रिया प्रति ॥५९२॥
त्व तु यास्यसि कान्तेन सार्धं श्वसुरसद्मनि । आवयोरेकदा वार्तालापादि स्यात्तदा वरम् ॥५९३॥
रमा प्राह यदीच्छा ते वार्तां कर्तुं मया सह । तदाऽहं पूरयिष्यामि सद्यस्तव मनोरथम् ॥५९४॥
जनो जगौ कथ वाञ्छा मे त्वया पूरयिष्यते । रमाऽवग् यदि तेऽस्तीच्छा विद्यते मिलितुं मम ॥५९५॥

॥ २४९ ॥

तदा मित्रयुतोऽह्वायारुह्य स्यन्दनमद्भुतम् । गच्छ गव्यूतमेकं त्वमस्मद्गमनवर्त्मनि ॥५९६॥
तत्र तुङ्गपुटीं कृत्वा स्थापयित्वैकतो रथम् । मित्रं तुङ्गपुटीपार्श्वे स्थापय त्वं सुयुक्तितः ॥५९७॥
३ त्वं तिष्ठेर्मध्यतस्तस्याः प्रोक्त्वेति सुहृदः पुरः । तदेत्य छाहडस्तत्र मित्रान्ते प्रक्ष्यति ध्रुवम् ॥५९८॥
कस्मादत्र स्थितस्त्वं तु तदा सुहृद् वदिष्यति । प्रसूतिसमयोऽकस्मात्पत्न्या ममाभवत्पथि ॥५९९॥
तेनाधुना भृशं शूलमागच्छद्विद्यते खलु । अहं तु प्रक्रियां तस्य न जानेऽस्थां ततोऽत्र हि ॥६००॥
६ इत्यादि शिक्षयित्वा तं रमा स्वजनसद्मसु । चिरं भ्रान्त्वा पितुर्गेहं समागान्मुदिताशया ॥६०१॥
उपावेश्य प्रियां तस्मिन् स्यन्दने छाहडस्तदा । प्रणम्य श्वशुरं श्वश्रूं चचाल स्वपुरं प्रति ॥६०२॥
मार्गे तुङ्गपुटीं दृष्ट्वा छाहडो मुग्धधीर्जगौ । कथमत्र स्थितोऽरण्ये छोटयित्वा रथं वद ॥६०३॥
९ स प्राहेह प्रियाया मे शूलं प्रसूतिकालजम् । आगच्छद्विद्यते तेन स्थितोऽहमत्र साम्प्रतम् ॥६०४॥
स्त्रियं विना स्त्रियास्तादृक् शूलं स्फेटयते न हि । ततोऽवक् छाहडः पत्नीं गच्छात्र योपिताऽन्तिके ॥६०५॥
तस्याः शूलं त्वकं सद्यः स्फेटयाङ्गप्रमर्दनात् । रमा प्राहाधुना मार्गे न स्थितिः शोभनाऽऽवयोः ॥६०६॥
१२ छाहडोऽवक् कथं मार्गे वनितां शूलपीडिताम् । विमुच्य गम्यते स्वीयग्रामे जल्प प्रियोत्तमे ! ॥६०७॥
तत उत्तीर्य शकटात् तुङ्गपुट्यन्तरे रयात् । रमा ययौ स्त्रियास्तस्याः पार्श्वे मायानिकेतनम् ॥६०८॥
तस्याशु पूरयित्वाऽऽशां पूर्वोक्तां सुखदानतः । उरस्थलं कञ्चुकं शीघ्रं परिधत्ते स्म सा तदा ॥६०९॥



स्त्रीचरित्रविषये छाहड पत्नी कथा।

तुङ्गपुटया वहि. सद्यो निर्गता पूरिताशया । एत्य प्रियान्तिके वामे भागे रथे उपाविशत् ॥६१०॥ [ तदा पत्युः पुरः-
छाहडोऽवदत् कथ पत्नि ! कञ्चुकस्त्वन्यथाऽजनि । शाटी म्लाना कथ ह्येषा शरीर चेदृश कथम् ॥६११॥ तयोक्तमिति
अणतूली परिहरीअ कापली साडी सल भरिआइ । हू तउ पूछउ प्राणप्रिये ! ए नयणा काइ मिलाइं" ॥६१२॥
तथा वनितयेदानीमपत्य जनितं किमु । वैदग्ध्यगर्विता साऽऽह रमेति रमणाग्रतः ॥६१३॥
"उादट छइल्ला ते भला जेह नामिइ छइल्ल । रात्रि सिउ आवइ दीकरा खेडितउं मूढ वइल्ल" ॥६१४॥
ततो मत्वा प्रियाहृच तादृग्जल्पनतः स च । अविश्वास करन् पत्न्याः स्वकीयपुरमागमत् ॥६१५॥
कुतश्चित्सिद्धपुरुषात् सम्प्राप्यामृतकुम्पिकाम् । वहिर्याति प्रिया दग्ध्वा बद्ध्वा पोट्टलके रजः ॥६१६॥
आगतः स्वगृहे कृत्वा जीवन्तीं सुधया स च । कारयामास गेहस्य कार्याणि छाहडस्तदा ॥६१७॥
गयातीर्थे गमिष्यामि यात्रार्थं पत्नि ! साम्प्रतम् । षण्मासान्ते समेष्यामि त्वया स्थेय समाधिना ॥६१८॥
उक्त्वेति छाहडो पत्नीं कृत्वा तद्भस्म पोट्टले । सुधाकुम्पिकया युक्ता प्रययौ विषमे वने ॥६१९॥
महद्द्रुमस्य शाखाया विवरे पोट्टल तकम् । छन्न न्यस्य ययौ यात्राकृते स दीपपर्वणि ॥६२०॥
इतस्तत्र छगीपालस्तस्य छायामधिस्थितः । शाखायाः शुष्कपत्राणि दृष्ट्वा तत्रायया स च ॥६२१॥
रक्षापोट्टलक दृष्ट्वोत्तार्याथ धरणीतले । तस्य छोटयतो रक्षा मध्येऽमृतच्छटैकिका ॥६२२॥
पतिता यावता तावत्सश्रृङ्गारा मृगेक्षणा । बभूव भस्म चालोक्य छगीपश्चाकितोऽजनि ॥६२३॥

॥ २५१ ॥

विभ्यन्नश्यति यावत्स तावत्साऽऽचष्ट बालिका। अत्रागच्छ कुरुष्व त्वं मां प्रियां भोगदानतः ॥६२४॥
ततः पश्चात्समागत्य छगीपोऽवग् मृगेक्षणे !। काऽत्र त्वं हेतुना केन संजातैवंविधा वद ॥६२५॥
रमाऽवग् मे प्रियो भस्म कृत्वाऽत्रैवं विमुच्य माम्। यात्रार्थं छाहडो यातो दीपपर्वदिने ध्रुवम् ॥६२६॥
षण्मासान्ते विधायाशु यात्रां स च समेष्यति। तेन तावन्मया सार्धं त्वं तिष्ठ पतिवद् ध्रुवम् ॥६२७॥
ततो हृष्टश्छगीपालः कारयन् स्वगृहक्रियाम्। तां स्त्रियं तस्थिवान् स्वेच्छं स च छाहडवत् सदा ॥६२८॥
पृष्ट्वा छगीपतिं दीपोत्सवं वस्नान् गतांश्च सा। जगौ कल्येऽद्य वा कान्तो ममात्रैष्यति सत्वरम् ॥६२९॥
तेन मां भस्म कृत्वाऽथ पूर्ववद् वटपादपे। मुक्त्वा गच्छ निजे स्थाने प्रीतिं च मयि मा मुचः ॥६३०॥
छगीपो भस्म तां कृत्वा बद्ध्वा पोट्टलके दृढम्। पूर्ववद्वटशाखायाः कोटरेऽमुचदञ्जसा ॥६३१॥
ततः स्वस्थानके तस्याश्चरित्रं स्वहृदि स्मरन्। छगीपालश्छगीश्चैव चारयामास कानने ॥६३२॥
इतः स छाहडो यात्रां कृत्वा तत्रैत्य पादपे। उत्तार्य भस्म तां चक्रे जीवन्तीं सुधया स्त्रिया ॥६३३॥
तस्या देहेऽम्बरे चापि गन्धं छागादिसम्भवम्। मत्वा दध्यौ स किं नारी भुक्तैषा छागपेन तु ॥३३४॥
विमृश्येति हृदि स्थाने तत्र मुक्त्वा वनान्तरे। छाहडोऽथ छगीपालमेकं भ्रमन् ददर्श च ॥६३५॥
पप्रच्छ छगीपालं कस्त्वं किमर्थमागतः। छगीपोऽवग् भ्रमन् यावद्विपिनेऽत्राहमागमम् ॥६३६॥
तावदेकाऽबलाऽकस्माद्वटवृक्षसमीपतः। दृष्टा मया ततो भीतो नंष्ट्वा त्वत्रागमं द्रुतम् ॥६३७॥


॥ २५२ ॥

छगीपालो जगौ नारी भुक्तैका मयका घनम् । भस्म कृत्वाऽथ शाखाया वटस्य मुमुचे मया ॥६३८॥
ज्ञात्वाऽथ छाहडः पत्नीचरित विषमं खलु । प्रियान्तिके समागत्य प्राहेति मर्मगर्भितम् ॥६३९॥
मई गई पलाइणी छापरि छारघएण । छाहड भणइ ते ढाढ नर जे रत्ता तीअगुणेण" ॥६४०॥
रमाऽऽचष्ट कथ कान्त ! भवतैवं प्रजल्प्यते । अहं तु त्वद्गुणे रक्ता तिष्ठामि प्रतिवासरम् ॥६४१॥
छाहडोऽवग् मया ज्ञाता रता त्वं नृपु भूरिषु । वदस्येवं कथं कान्ते ! ममाग्रे कूटमत्र तु ॥६४२॥
जल्पन्तीमिति तां पत्नीं मुक्त्वा वैराग्यवासितः । प्रव्रज्यां तापसीं प्राप तापसस्यान्तिके स च ॥६४३॥
छाहडो निरतिचार तापसव्रतमादरात् । पालयित्वा ययौ स्वर्गं जीवितव्यक्षये क्रमात् ॥६४४॥
सेवमाना कुमार्गं तु रमा शीलविखण्डनात् । मृत्वा प्रान्ते ययौ श्वभ्रे भूयिष्ठदुःखदायके ॥६४५॥
एता कथा बुधोपान्ते निशम्य विक्रमार्यमा । ददौ कोटिमितं द्रव्यं भाण्डागारिकपार्श्वतः ॥६४६॥
इति वदान्यत्वे कुशीलिनीस्त्रीविषये छाहडभार्यासम्बन्धः, विक्रमार्कभूपसम्बन्धश्च ॥
एकदा विक्रमादित्यो यावत्ससदि तस्थिवान् । तावत्कश्चिन्नरोऽभ्येत्य प्रोवाचेति प्रगल्भवाग् ॥६४७॥
लोहाभिधे पुरे लोकाः सर्वे धूर्तधुरन्धराः । वसन्तो वञ्चयन्त्येव बुधानपि जडानपि ॥६४८॥
श्रुत्वेति विक्रमादित्यो दान दत्त्वा यथोचितम् । तस्मै तां नगरीं द्रष्टुमुत्सुकोऽजनि सत्वरम् ॥६४९॥
ततस्तां नगरीं द्रष्टुं भद्दमानं धुरि ध्रुवम् । पूर्वस्या दिशि भूपालः प्रजिघाय शुभेऽहनि ॥६५०॥

विक्रमस्य धूर्तजनवीक्षणाय लोहपुरं प्रति गमन् ।

॥ २५३ ॥

स्वयं स्मृतनमस्कारो विक्रमार्कमहीधवः । अचालीदुत्तराशायां द्रष्टुं तां नगरीं क्रमात् ॥६५१॥ यतः—
"सीअह सउण न चंदबल न वि जोइ धणरिद्धि । एकल्लउ लक्खिहिं भिडइ जिहां साहस तिहां सिद्धि" ॥
राजा चलन्वने कुण्डद्वयं शीतोष्णवारिभृत् । दृष्ट्वा यावत्स्थितस्तावत्कपियूथं समागमत् ॥६५३॥
कुण्डे शीतजले स्नात्वा भूत्वा विमलविग्रहाः । दुकूलान्यन्तिकाद् वृक्षात्कोटरात्प्रललुर्नराः ॥६५४॥
परिधाय दुकूलानि नरास्ते कुसुमैर्वरैः । तत्रस्थार्हद्गृहोपान्ते जिनेन्द्रमार्चयन् मुदा ॥६५५॥
स्तुत्वा स्तोत्रैर्जिनेन्द्रं ते ध्यात्वा नत्वा पुनः पुनः । चिक्षिपुः पापसङ्घातमार्जयन् पुण्यमूर्जितम् ॥६५६॥ यतः—
"एकमपि येन कुसुमं भगवत्युपयुज्यते सबहुमानम् । तस्य नरामरशिवसुखफलानि करपल्लवस्थानि" ॥६५७॥
तत उष्णपयःपूर्णे कुण्डे स्नात्वा नरा द्रुतम् । वानरीभूय सर्वज्ञं नत्वा स्वं स्थानकं जग्मुः ॥६५८॥
चमत्कृतो नृपः पार्श्वे जिनमभ्यर्च्य सत्सुमैः । स्तुत्वाऽपश्यत् चलत् चौरपञ्चकं वादतत्परम् ॥६५९॥
राजा जगौ कथं वादं यूयं कुर्विध्वमीदृशम् । विवादेन तु लभ्यन्ते दृषदो न हि मोदकाः ॥६६०॥ यतः—
"वैरं वैश्वानरो व्याधिर्वादव्यसनलक्षणाः । महानर्थाय जायन्ते वकाराः पञ्च वर्धिताः" ॥६६१॥
चौरा जगुर्वने योगिपार्श्वे वस्तुचतुष्टयम् । अपूर्वं दृष्टमस्माभिस्ततो न सुमनोऽभवत् ॥६६२॥ तथाहि—
"खटिकालिखितस्तार्क्ष्यः सजीवो जायते क्षणात् । तोत्रेण ताडितो व्योम्नि चलत्येव समीरवत् ॥६६३॥
विक्रीतो लभते द्रव्यं लक्षमेकं तुरङ्गमः । खट्वा स्पृष्टा सती व्योम्नि याति दीव्यप्रभावतः ॥६६४॥

विक्रमस्य धूर्तजनवीक्षणाय लोहपुरं प्रति गमनम् ।

॥ २५४ ॥

प्रातः कन्था हृता दत्ते दीनारशतपञ्चकम् । स्थाली धृताऽग्रतो भोज्य पुम्भ्यो दत्ते मनोहितम्" ॥६६५॥
वस्तुचतुष्टय वर्यं दृष्ट्वा नश्चलितं मनः । लोभः किं कि नरं नारी कारयत्यशुभं न हि ॥६६६॥
शरीरं श्लथते नाशा रूप याति न पापधीः । जरा स्फुरति न ज्ञान धिग् स्वरूपं शरीरिणः ॥६६७॥
राजाऽऽचष्टार्प्यतां वस्तुचतुष्कं मह्यमेव भोः । ततो विचार्य युष्मभ्य दास्ये कृत्यानुसारतः ॥६६८॥
वस्तुचतुष्टय तेभ्यः प्राप्य भूमिपतिर्जगौ । युष्माभिर्योगिहननात्कृतं पापं फलिष्यति ॥६६९॥
प्रोक्त्वेति नृपतिः खट्वाऽऽरूढो गगनवर्त्मनि । ययौ लोहपुरे ऋद्धया स्वर्गपुर्या मनोहरे ॥६७०॥
तत्रैक नैगमं मित्रं कृत्वा स्थाली न (ली च) खट्विकाम् । दत्त्वा तस्मै ययौ भूपः पुरीचरित्रमीक्षितुम् ॥६७१॥
तत्र कामलतापार्श्वे स एकवासरं नरः । तिष्ठेद्यो ददते लक्षमितं द्रव्य सुभक्तितः ॥६७२॥
कृत्वा खट्टिकया तार्क्ष्यं विक्रीय द्रविणेन तु । वेश्यायाः सदने तस्थौ विक्रमादित्यभूमिभुग् ॥६७३॥
कन्थातः प्राप्य दीनारान् सद्यः पञ्चशती प्रगे । वर्यवेपधरो दान दत्तेऽर्थिभ्यो नृपो वहु ॥६७४॥
ज्ञात्वाऽक्का खट्टिका-कन्थे तार्क्षद्रविणदायके । छलाज्जग्राह छन्न सा विक्रमार्कसमीपतः ॥६७५॥
धनाभावात् पुरीनार्या तया गच्छन् नृपस्तदा । निषिद्धः खिन्नचेतस्को ध्यातवानिति चेतसि ॥६७६॥
यादृशा गणिकाः शास्त्रमध्ये वर्ण्यन्त एव तु । तादृशाः साम्प्रत ज्ञाताः कूटछद्मपरा मया ॥६७७॥
इतस्तत्रागतो भट्टो जज्ञौ भूपमुखोदितम् । शीतोष्णजलकुण्डादि वेश्याकृतछलान्तिकम् ॥६७८॥

विक्रमस्य धूर्तजनवीक्षणाय लोहपुरं प्रति गमनम् ।

विचार्य भूप-भट्टाभ्यां शीतोष्णजलकुण्डयोः । नीरद्वयं समानीय भूपोऽगाद् गणिकालये ॥६७९॥
कुर्वत्याः सवनं पण्याङ्गनाया भूपती रहः । उष्णाम्बुक्षेपतः कामलतिकां वानरीं व्यधात् ॥६८०॥
तनयां वानरीभूतां दृष्ट्वाऽक्का हृदयं दृढम् । कुट्टयन्ती जनान् भूरीन् रोदयामास सकृपम् ॥६८१॥
वैद्यान् ज्योतिषिकान् विप्रान् मन्त्रतन्त्रादिकोविदान् । ज्ञात्वा दत्त्वा धनं पुत्रीं सज्जीकर्तुं प्रयच्छ(स्य)ति ॥६८२॥
इतः श्रीविक्रमादित्यं योगिवेषमनोहरम् । कारयित्वा वने मुक्त्वा भट्टोऽगाद् गणिकान्तिके ॥६८३॥
अक्काऽवग् मे सुता कस्माद्वानरी समजायत । तेनाहकं म्रिये प्राणत्यागाद्वैदेशिकोत्तम ! ॥६८४॥
वेश्याऽवग् यः सुतां मामकीनां सज्जां करिष्यति । तदा तस्मै प्रदास्यामि मुखेन मार्गितं धनम् ॥६८५॥
भट्टोऽवक् क्रियते पुण्यं यादृक् पापं शरीरिभिः । आसद्यते फलं तादृक् परत्रामुत्र निश्चितम् ॥६८६॥
ततो भट्टो जगावेको योग्युद्याने मयेक्षितः । स वेत्ति सकलां विद्यां नृनार्यादिककारकाम् ॥६८७॥
वेश्याऽवग् योगिनं तं मे यदि त्वं दर्शयिष्यसि । तदा तुभ्यं धनं भूरि दास्येऽहं जीविकाकृते ॥६८८॥
ततो भट्टो वने गत्वा योगिनं विष्टरस्थितम् । दर्शयामास वेश्यायै ततोऽक्का प्रणनाम तम् ॥६८९॥
अथावग् सकृपं वेश्या योगिनं ध्यानगं प्रति । जगद्वन्द्य कृपागार परोपकृतिकारक ॥६९०॥
प्रसद्य योगिराट् ! पुत्रीं सज्जां कुरु मम ध्रुवम् । तुभ्यं मुखोदितं दास्ये तव च स्याद् दृपं बहु ॥६९१॥
नाटयित्वा क्षणं ध्यानं धूनयित्वा क्षणं शिरः । योग्यवग् वञ्चितो ह्येकः पुमान् वैदेशिकस्त्वया ॥६९२॥

तेन पापेन ते पुत्री वानर्यजनि साम्प्रतम् । कृत पाप लगत्येवामुत्राप्यथ परत्र च ॥६९३॥
यदि त्व खट्टिकाकन्ये हृते वैदेशिकस्य ये । ते ममाहृयोः पुरो मुञ्चोपदादम्भात्पणाङ्गने ! ॥६९४॥
तदाऽत्र ते सुता सज्जा कुर्वेऽक्के मन्त्रयोगतः । अथ त्वं कथितं मे न करिष्यसि तदा मृता ॥६९५॥
ततोऽक्कया भयात् खट्वादिकं सर्वं सुयोगिने । वितीर्य जगदे पुत्रीं सज्जा कुरु मम द्रुतम् ॥६९६॥
शीताम्बुस्नानपानीये क्षिप्ते मन्त्रपुरःसरम् । योगिना कारिता स्नान वानरी सा शुभेऽहनि ॥६९७॥
क्षणात्तदाऽभवन्नारी वानरीत्व विहाय च । योगी जगौ त्वया नैको वञ्चनीयो नरः क्वचित् ॥६९८॥
अनाय्य (प्य) भोज्यमभाज्य विप्रयोगः प्रियैस्सह । अप्रियैः सम्प्रयोगश्च सर्वं पापविजृम्भितम् ॥६९९॥
परस्य वञ्चन वेश्या निषिध्य मेदिनीपतिः । भट्टमात्रयुतोऽचालीदवन्तीं नगरी प्रति ॥७००॥
उपकार वितन्वानो लोकेभ्यो विक्रमार्यमा । पृथक् पृथग् ददौ वस्तुचतुष्कं हेलया ध्रुवम् ॥७०१॥
एव श्रीविक्रमादित्यः कृत्वोपकृतिमादरात् । आययौ स्वपुरे स्वर्गपुरीसहोदरे क्रमात् ॥७०२॥
एकदा विक्रमादित्यो मन्दिराह्वे पुरे ययौ । तत्र श्रीदस्य तनयो मृतः क्षिप्तश्चितान्तरे ॥७०३॥
यावद्वह्निं ददात्येव श्रेष्ठी तावत्स नन्दनः । मृतेऽपि दिव्यभावेन समेति श्रेष्ठिनो गृहे ॥७०४॥
द्वितीयेऽपि दिने क्षिप्तश्चिताया स सुतः पुनः । श्रेष्ठिनः सदनेऽप्यागादेवं जातं दिनाष्टकम् ॥७०५॥
ततो बिभ्यत् स च श्रेष्ठी सूनोः स्वरूपमाग्रहात् । जगाद नृपतेः पार्श्वे स्वपुर्योः शुभहेतवे ॥७०६॥

श्रीदतनय-
मृतकदाह-
संबन्धः ।

॥ २५७ ॥

ततः शवस्य वृत्तान्तं पृष्ट्वा गणकपार्श्वतः । भाव्यश्रेयः क्रमाद्राजा श्रेष्ठी च जज्ञतुस्तदा ॥७०७॥
ततो भूपेन पटहोऽवादीत्यनुगपार्श्वतः । यः कश्चिद्दहते देहं शवस्यास्याग्निदानतः ॥७०८॥
३ तस्मै कोटिमितं द्रव्यं दास्येऽहं बहुमानतः । श्रुत्वेति पटहं वाद्यमानं पस्पर्श विक्रमः ॥७०९॥
ततो भूपतिमापृच्छ्य लात्वा शबं स विक्रमः । निशायां प्रथमे यामे श्मशाने समुपागमत् ॥७१०॥
यावदत्र स्थितस्तावद् भूपः स्त्रीरुदितं भृशम् । श्रुत्वा गत्वा च पप्रच्छ भो नारि ! रुद्यते किमु ॥७११॥
६ नारी जगौ पतिर्मेऽद्य नृपभृत्यैर्विनागसा । शूलायां रोपितो जीवन्विद्यते साम्प्रतं स च ॥७१२॥
आनीतं भोजनं दातुं मया पत्युरिहाधुना । उच्चत्वान्न हि शक्येत तेन रोदिमि भूरिशः ॥७१३॥
ततो भूपो जगौ मेंऽसे चटित्वा भोजनं त्वकम् । देहि पत्ये यथा स्वस्थः पतिस्ते स्वर्गभाग् भवेत् ॥७१४॥
९ भूपस्यांसे ततो दत्त्वा क्रमौ कर्त्रिकया च सा । छेदं छेदं तनुं पत्युर्मांसमत्ति निजेच्छया ॥७१५॥
स्कन्धस्योर्ध्वं पतद्रक्तमम्बुभ्रान्त्याऽवगम्य तु । दध्यौ भूपोऽगमन्मेघो वर्षितुं साम्प्रतं किमु ॥७१६॥
अकृत्यं तादृशं पापं कुर्वाणां तां नितम्बिनीम् । दृष्ट्वा भूमीपतिर्बाढं हक्कयामास निर्दयम् ॥७१७॥
१२ अशक्ता छलितुं भूपं सद्यो नारी तिरोदधे । ततो भूपो ययौ यामे द्वितीयेऽन्यत्र कानने ॥७१८॥
मुक्त्वा पार्श्वे शवं यावत्सुप्तो भूमीपतिः सुखम् । तावच्छवयुतं क्ष्मापं रक्षोऽनैषीद्वनान्तरे ॥७१९॥
तस्मिन् कटाहिकां स्फारां मध्ये ज्वलद्धनंजयाम् । कृत्वाऽऽनीय नरान् बाढं चिक्षिपू राक्षसा बहून् ॥७२०॥



श्रीदतनय-
मृतकदाह-
संबन्धः।

भूप क्षेप्तुं यदा चक्रुरुद्यम राक्षसाधमाः । तावत् श्रीविक्रमादित्यो हन्तु तानुत्थितो द्रुतम् ॥७२१॥
हतास्त शा महीशेन राक्षसा यष्टि–मुष्टिभिः । यथाऽभ्येत्य नृपोपान्ते जगुर्भृत्या वयं तव ॥७२२॥
३ राक्षसास्तान् नृप जीवदयामूल नरेश्वरः । ग्राहयित्वाऽगमद्यामे तृतीये वापिकान्तिके ॥७२३॥
तत्रस्थो नृपतिर्नारीं रुदतीं करुणस्वरम् । श्रुत्वा दूरे च तत्रेत्य प्राह किं नारि ! रोदिषि ॥७२४॥
नारी जगावह भीमभूपपत्नी मनोरमा । हताऽस्त्वपेन दुष्टेन मच्छीलं छेत्तुमद्य तु ॥७२५॥
६ अथ को दृश्यते नैव नरोऽत्र जगतीतले । मोचयत्यधमात्पुण्यजनान्मां यो जगद्धितः ॥७२६॥
राज्ञोक्त विद्यते कुत्र सोऽथाङ्गुल्याः प्रयोगतः । कौणपो दर्शितो नार्या स्थितो दूरवने सदा ॥७२७॥
ततस्ता रक्षितु नारीं साहसी विक्रमार्यमा । युद्धव्यतिकरेणाशु जघान राक्षसं तकम् ॥७२८॥
९ चतुर्थे प्रहरे राजा जगौ शव प्रति स्फुटम् । शवोत्तिष्ठ कुरुष्व त्वं द्यूतं सार्धं मयाऽधुना ॥७२९॥
शवः प्राह नर ! त्व भो यत्र हारयिष्यसि । तदा तव शिरः सद्यो ग्रहीष्येऽम्बुजनालवत् ॥७३०॥
राजाऽऽचष्ट यदि त्व भो ! हारयिष्यसि साम्प्रतम् । तदा त्वया चितामध्ये ज्वलितव्य तृणौघवत् ॥७३१॥
१२ शवेन रममाणेन हारित भूपपार्श्वतः । ततश्चितान्तरे भस्मीकृतं स्वं तेन सत्वरम् ॥७३२॥
ततः ाह पुरे गत्वा शवसम्बन्धमादितः । विक्रमार्को नृपोपान्ते ततो हृष्टो नृपोऽभवत् ॥७३३॥
भूपालः श्रेष्ठिनः पार्श्वाल्लात्वा पूर्वोदित धनम् । याचकेभ्यो ददौ सद्यो विक्रमः पार्थभूपवत् ॥७३४॥

॥ २५९ ॥

विक्रमस्य स्त्रीराज्ये गमनम् ।

एकदा विक्रमादित्यो विलोकयन् महीतलम् । स्त्रीराज्ये जग्मिवान् सन्ति यत्रातिरुचिराः स्त्रियः ।।७३५।।
शंखिनी–पद्मिनी मुख्या नार्यो प्रीतिरतिप्रभाः । भोगाय प्रार्थयन्ति स्म हावभावविधानतः ।।७३६।।
राजा जगौ न हि प्राणात्ययेऽप्यहं कदाचन । परिणीतां प्रियां मुक्त्वा नेच्छामि वनितां पराम् ।।७३७।। यतः–
"अलसो होइ अकज्जे पाणिवहे पंगुलो सया होइ । परतत्तीसु अ बहिरो जच्चंधो परकलत्तेसु" ।।७३८।।
सुशीलं विक्रमादित्यं मन्वाना योषितस्तदा । माहात्म्ययुक्तरत्नानि ददुर्चतुर्दश ध्रुवम् ।।७३९।।
स्यादेकेनानलस्तम्भ एकेन जायते रमा । एकेन प्राप्यते नीरमेकेन वाहनं पुनः ।।७४०।।
एकेन खड्गघातो न लगत्यङ्गे मनागपि । एकेन वशगा नार्यो नरा भूपा भवन्ति च ।।७४१।।
वर्या रसवतीं दत्ते रत्नमेकं तु याचितम् । एकेन वर्धते सर्वं कुटुम्बं धनसञ्चयम् ।।७४२।।
उत्तीर्यतेऽब्धिरेकेन विद्यैकेन वरा भवेत् । एकेन वशगा भूतादयः स्युर्न छलन्ति च ।।७४३।।
दशत्येकेन नो सर्प एकेन शिबिरं भवेत् । एकेन गम्यते व्योममार्गेषु सातपूर्वकम् ।।७४४।।
रत्नान्येतानि भूपालो लात्वा चलन् पुरं प्रति । ददौ पृथक् पृथग् मार्गे याचकेभ्यो मुदा क्रमात् ।।७४५।।

औदार्ये स्त्रीराज्यगमनसम्बन्धः ।।

|| २६० ||

विक्रमस्य शतमत्यादि भटानां संबन्धः ।

स्वोपार्जितश्रियं सप्तक्षेत्रेषु विक्रमार्यमा । व्ययन् शश्वन्निजं जन्म सफलीकुरुते स्म सः ।।७४६।।
शत-सहस्र-लक्षेभ्यो बुद्धिः कोटिमतिस्तथा । एतेऽभूवन् भटा अङ्गरक्षका विक्रमोष्णगोः ।।७४७।।

यामे यामे निशीथिन्यामेकैकः सेवकः क्रमात् । अङ्गरक्षा व्यधाद्यत्नाद्विक्रमाङ्कस्य सन्ततम् ॥७४८॥ यतः–
“हीनमतिः पुरो याति निशि जागर्ति चाटुमान् । द्वारे तिष्ठति शूरात्मा खड्गपाणिश्च सेवकः” ॥७४९॥
अन्येद्युर्विक्रमादित्यः सुप्तो रात्रौ पुराद् वहिः । रुदतीं स्त्रियमाकर्ण्य जगौ शतमतिं प्रति ॥७५०॥
शतमते ! वहिः पुर्यां व्रज रोदनकारणम् । पृष्ट्वा स्त्रियं समागच्छेत्युक्ते शतमतिर्जगौ ॥७५१॥
स्वामिन्नेष्यति ते निद्रा भूरिशः सन्ति वैरिणः । तेन गन्तु मनो नैव दत्ते मम मनागपि ॥७५२॥ यतः–
“जेण कुल आयत्त तं पुरिसं आयरेण रक्खेह । न हु तुम्बंमि विणट्ठे अरया साहारया हुंति” ॥७५३॥
राज्यं कुर्वति भूपाले शिष्टे धर्मपरायणे । जायन्ते निखिला लोकाः सुखिनो निर्जरा इव ॥७५४॥
राजा प्राह व्रज स्वस्थः जागरिष्याम्यहं पुनः । त्व चादेशमम्रु कृत्वा ममात्रागच्छ वेगतः ॥७५५॥ यतः–
“उद्यमे नास्ति दारिद्र्य पठने नास्ति मूर्खता । मौनेन कलहो नास्ति नास्ति जागरतो भयम्” ॥७५६॥
गते शतमतौ शूरे पत्राणि भक्षयन् क्षणम् । नीत्वा पत्न्या समं राजा तत्र सुष्वाप निर्भरम् ॥७५७॥
प्राप्यादेश शतधिया गत्वा स्त्रीसन्निधौ द्रुतम् । रोदने कारण पृष्टा जगावेवं नितम्बिनी ॥७५८॥
भारपट्टादधः कृष्णसर्प उत्तीर्य वेगतः । भूपाल प्रहरस्यान्ते सद्यः सम्प्रति दङ्क्ष्यति ॥७५९॥
अवन्तीभूपते राज्यपद्माधिष्ठायिका सुरी । उत्पद्यमानविघ्नौघं भिनद्म्यहं सदा द्रुतम् ॥७६०॥
भेत्तु विघ्नोच्चयं नैव शक्ताऽस्मि साम्प्रतं मनाग् । तेनात्र रुद्यते धीर वीर वीर मया स्फुटम् ॥७६१॥

॥ २६१ ॥

शतबुद्धिर्जगौ स्वस्थीभव सम्प्रति देवते ! । सर्वं समीहितं तावकीनं च करवाण्यहम् ॥७६२॥
एवमाश्वास्य तां युक्त्या शतधीस्त्वरितं तदा । पश्चादेत्य नृपं सुप्तं दृष्ट्वा दध्याविदं हृदि ॥७६३॥
अवसरोऽधुना नास्ति गन्तुं भूपान्तिके मम । यान्ति घट्यः क्षणात्सर्पः समेष्यति न संशयः ॥७६४॥
इत्यादि भूरिशः कल्पान् शतबुद्धौ वितन्वति । आगाद् भूपोपरि श्यामवर्णाहिर्भारपट्टके ॥७६५॥
तमायान्तमहिं वीक्ष्योत्थाय शतमतिस्तदा । द्विधा त्रिधा विधायाशु रहश्चिक्षेप भाजने ॥७६६॥
पतितं गरलबिन्दुं वीक्ष्य राज्या हृदि स्फुटम् । विघ्नोच्छित्त्यै शतमतिरपासार्षीच्छनैस्तदा ॥७६७॥
राज्ञीहृदि स्थितं हस्तं शतबुद्धेस्तदा नृपः । जागरितो निरीक्ष्याधात्प्रकोपं शतबुद्धये ॥७६८॥
दध्यौ भूपोऽधुना किं हन्मीमं सेवकं द्रुतम् । पुनर्ध्यातं महीशेन कथं हन्मि स्वयं स्फुटम् ॥७६९॥
विद्यतेऽस्य मनः क्रूरं सेवकस्य दुरात्मनः । तेनान्यसेवकशयान्मारयिष्याम्यहं रहः ॥७००॥ यतः—"षट्कर्णो०"॥
विक्रमस्य शतमत्यादिभटानां संबन्धः ।
शतबुद्धिं द्रुतं हन्तुकामोऽपि नृपपुङ्गवः । गोपयित्वाऽऽकृतिं स्वीयां विससर्ज गृहं प्रति ॥७७१॥
शतबुद्धिर्गृहे गत्वा हृष्ट आकार्य गायनान् । नृपशान्त्यै ददद् दानं मण्डयामास नाटकम् ॥७७२॥
द्वितीयप्रहरे पत्नीं विसर्ज्य नृपपुङ्गवः । सहस्रबुद्धिमाकार्य जगौ शतमतिं जहि ॥७७३॥
श्रुत्वा सहस्रधीरेतज्जगाद नृपतेः पुरः । स्वामिन्नेष्यति ते निद्रा कदाचित्साम्प्रतं ध्रुवम् ॥७७४॥
पूर्वापराधिताः सन्ति भूरिशो विद्विषस्तव । तेन गन्तुं मनो नैव दत्ते मम मनागपि ॥७७५॥

॥ २६२ ॥

राजा माह व्रज स्वस्थो जागरिष्याम्यहं स्फुटम् । त्वं चादेशमिमं कृत्वा ममात्रागच्छ वेगतः" ॥७७६॥ यतः–
"उद्यमे नास्ति दारिद्र्यं जपतो नेति पातकम् । मेघवृष्टौ न दुर्भिक्षं नास्ति जागरतो भयम्" ॥७७७॥
सहस्रधीर्नृपादेशं प्राप्य चिन्तातुरो द्रुतम् । ययौ शतमतेः पार्श्वे नृत्यं कारयतस्तदा ॥७७८॥
हृष्टं शतमतिं दानपरं वीक्ष्य सहस्रधीः । दध्यावस्य न कोऽप्यस्त्यपराधो विस्मितास्यतः ॥७७९॥ यतः–
"विपदि परेषां सन्तः समधिकतरमेव दधति सौजन्यम् । ग्रीष्मे भवन्ति तरवो घनकोमलपल्लवच्छायाः" ॥७८०॥
अकार्यकर्तुरन्यस्त्रीरतस्य तस्करस्य च । जायते न मुखं हृष्टं भयव्याप्तमनस्त्वतः ॥७८१॥
महतामुदयं सन्तो दूरस्थितयोऽपि दधति सन्तोषम् । नभसि समुद्गत इन्दौ मुदितं भुवि सिन्धुनाथेन ॥७८२॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे । साधवो नहि सर्वत्र चन्दनं न वने वने" ॥७८३॥
एवंविधे मुदा गीतनृत्यादि सुन्दरं स्फुटम् । निश्छद्मानो नरा धीराः कारयन्ति पुनः परे ॥७८४॥
शतधीः माह कस्यार्थं त्वमागा अधुना सुहृत् । विमुच्यैकाकिनं भूपं वैरिणः सन्ति भूरिशः ॥७८५॥
विघ्नमद्य महीशस्य दुःशकं हि समागतम् । टलितं भाग्ययोगेन लोकानामावयोः पुनः ॥७८६॥
व्रज पश्चाद् द्रुतं तावकीना वेला विनक्ष्यति । पालयन्ति नरा धीराः मपन्नमात्मनः सदा ॥७८७॥ यतः–
"चलति कुलाचलचक्रं मर्यादामतिपतन्ति जलनिधयः । प्रतिपन्नममलमनसा न चलति पुंसा युगान्तेऽपि ॥७८८॥
पडिवन्न दिणयर–वासराण दोण्ह पि अखंडिअं होइ । सूरो न दिणेण विणा दिणो अ न हु सूरविरहंमि ॥७८९॥

॥ २६३ ॥

अलसंतेण वि सज्जणेण जे अक्खरा समुल्लविआ । ते पत्थर टंकुकीरिअव्व न अन्नहा हुंति" ॥७९०॥
शतबुद्धेर्मुखाकारक्रियाजल्पादिभिस्तदा । मत्वा निर्दोषतां प्राह सहस्रधीरिति स्फुटम् ॥७९१॥
गीतनृत्योत्सवं प्राज्यं निशम्य भवदालये । द्रष्टुमागामहं हृष्टोऽधुना शतमते ! द्रुतम् ॥७९२॥ यतः–
तुष्यन्ति तापसा भोज्यैर्मयूरा घनगर्जितैः । साधवः परसम्पत्त्या खलाः परविपत्तितः ॥७९३॥
ततः सन्मानितस्तेन ताम्बूलेन सहस्रधीः । भूपपार्श्वे द्रुतं रक्षां कर्तुं पश्चात्समीयिवान् ॥७९४॥
भूपोऽवग् किं ममादेशः कृतः सहस्रधि (धीः) ! त्वया । श्रुत्वैतन्मौनमाधाय तस्थौ सहस्रधीस्तदा ॥७९५॥
अजल्पन्तं च तं दृष्ट्वा भूपः प्राह सहस्रधि (धीः) ! । त्वमपि शतधीतुल्यो जातोऽसि साम्प्रतं मम ॥७९६॥
ततः स्वस्थं नृपं कर्तुं सद्वाक्येन सहस्रधीः । पश्चात्तापोपरि प्राह ब्राह्मणीनकुलं यथा ॥७९७॥ तथाहि–
अपरीक्षितं न कर्तव्यं कर्तव्यं सुपरीक्षितम् । पश्चाद् भवति सन्तापो ब्राह्मणीनकुलं यथा ॥७९८॥
श्रीगृहे कृष्णविप्रस्य गृहोपान्तेऽन्यदा वरे । प्रासूत नकुली पुत्रं वर्योकारं मनोहरम् ॥७९९॥
पुत्रवन्नकुलं पालयन्ती रूपवती क्रमात् । सूते स्म तनयं दिव्यरूपं चन्द्राभिधं तदा ॥८००॥
अन्येद्युर्ब्राह्मणीसूनो रिङ्खतः प्राङ्गणे सतः । विमुच्य नकुलं रक्षाकृते प्राहेति रङ्गतः ॥८०१॥
जलाय साम्प्रतं यामि रक्षणीयस्त्वया सुतः । एवमुक्त्वा गता नीरानयनार्थं द्विजप्रिया ॥८०२॥
आगच्छन्तमहिं दृष्ट्वा कृष्णं बालकसन्निधौ । नकुलः सम्मुखं गत्वा व्यधाद् युद्धं भृशं स्वयम् ॥८०३॥



अपरीक्षित-
कर्तव्ये ब्रा-
ह्मणीनकुल-
कथा ।

हत्वाऽहिं बालकोपान्ते खण्डशो नकुलो मुदा । रक्तक्लिन्नमुखः प्रोक्तुं जननीसम्मुखोऽचलत् ॥८०४॥
तादृश नकुल दृष्ट्वा दध्यावेवं द्विजप्रिया । नूनं हत्वा सुतं पापी नकुलोऽयं समागतः ॥८०५॥ यतः–
"जठराग्निः पचत्यन्नं फल कालेन पच्यते । कुमन्त्रैः पच्यते राजा पापी पापेन पच्यते ॥८०६॥
ब्राह्मणी नकुल हत्वा रुष्टा यावदगाद् गृहम् । तावद्ददर्श तनय रिङ्खन्त प्राङ्गणेऽभितः ॥८०७॥
पतितानिव सर्पस्य खण्डान्येक्ष्य द्विजप्रिया । पश्चात्तापपरा यावज्जीवं पुत्रवधादभूत् ॥८०८॥ यतः–
"प्रमादः परमद्वेषी प्रमादः परम विषम् । प्रमादो मुक्तिपुर्दस्युः प्रमादो नरकानयम् ॥८०९॥
प्रमादस्य महाहेश्च दृश्यते महदन्तरम् । आद्याद्भवे भवे मृत्युः परस्माज्जायते न वा" ॥८१०॥
एवं स्वामिन्नविचार्य कार्यकर्तुर्नरस्य हि । पश्चात्तापो भवेत्तेन प्रतीक्षस्वाधुना क्षणम् ॥८११॥
श्रुत्वैतद् भूपतिर्दध्यावयं सहस्रधीः पुनः । शतधीसोदरः कार्याकरणादधुनाऽजनि ॥८१२॥
द्वितीयप्रहरस्यान्ते विसृज्य सेवक च तम् । लक्षबुद्धिं समाकार्य पूर्ववन्नृपतिर्जगौ ॥८१३॥
श्रुत्वैतल्लक्षधीरेतज्जगाद नृपतेः पुरः । स्वामिन्नेष्यति ते निद्रा कदाचित्साम्प्रत द्रुतम् ॥८१४॥
पूर्वं विरोधितास्सन्ति भूरिशो विद्विषस्तव । तेन गन्तुं मनो नैव दत्ते मम मनागपि ॥८१५॥
राजा प्राह व्रज स्वस्थो जागरिष्याम्यहं स्फुटम् । त्वं चादेशमिमं कृत्वा ममात्रागच्छ वेगतः ॥८१६॥ यतः–
"नृणां जागरतां नैव भयं भवति कर्हिचित् । सन्नद्धबद्धवसुधाधवस्येव रणाङ्गणे" ॥८१७॥

॥ २६५ ॥

श्रुत्वैतल्लक्षधीर्दध्यौ नूनमेष महीपतिः । विपरीतमतिर्जात ईदृक्षजल्पनात् स्फुटम् ॥८१८॥
प्रतीक्षस्व क्षणं स्वामिन् ! करिष्यामि वचस्तव । आदावेकां कथां कथ्यमानां सम्यग् मया शृणु ॥८१९॥
३ भूपोऽवग् लक्षबुद्धे ! त्वं कथयादौ कथां वराम् । ततः समीहितं मे हि भवान् करोतु तत्क्षणम् ॥८२०॥
लक्षबुद्धिस्ततो भूमीनाथस्य पुरतस्तदा । स्थिरीकर्तुं नृपं सद्यः कथामेवं जगौ स्फुटम् ॥८२१॥
लक्ष्मीपुरेऽभवद् भीमश्रेष्ठिनः सुन्दरः सुतः । रूप-लावण्य-सौभाग्य–विनयादिगुणाम्बुधिः ॥८२२॥
६ मात्रापित्रोः स्वजनस्य रिङ्खन् सुन्दरनन्दनः । प्राङ्गणे तनुते मोदं बालेन्दुरिव वारिधेः ॥८२३॥ यतः–
"उत्पतन् निपतन् रिङ्खन् हसन् लालावलीर्वमन् । ज(अ)जल्पन् व्यक्तमादत्ते मातापित्रोर्मुदं भृशम् ॥८२४॥
वर्धमानः क्रमात् पित्रा पाठितः पण्डितान्तिके । धर्मकर्मकलाः कल्याः सुन्दरः सुन्दराकृतिः ॥ यतः–"आहार०"
९ "सकलाऽपि कलावतां कला विकला पुण्यकलां विना किल । सकलावयवा वृथा यथा तनुभाजामकनीनिकं(का)तनुः"॥
मातापित्रोश्च चित्तेन प्रयाति सुन्दरः सदा । देवगुरुपदाम्भोजं सेवतेऽवसरे पुनः ॥८२७॥ यतः–
योऽवश्यं पितुरादेशं कुरुते मुदितः सदा । स एव लभते कीर्तिप्रतिष्ठाकमलाः पुनः ॥८२८॥
१२ एकेन चन्दनक्षोणिरुहेण निखिलं वनम् । वास्यते सूनुनेवाशु सद्यशो गन्धशालिना ॥८२९॥
अन्येद्युः पितरं पृष्ट्वा क्रयाणकानि भूरिशः । गृहीत्वा वाहनारूढोऽचालीद्वार्द्धौ शुभेऽहनि ॥८३०॥
शुभवातप्रयोगेण रत्नद्वीपे रमापुरे । गत्वा बह्वीं रमां सद्योऽर्जयामास स सुन्दरः ॥८३१॥

स्वकीयपुरवास्तव्यं पूर्वायातं धनं श्रिये । गच्छन्तं स्वपुरे मासश्रीकं वीक्ष्याह सुन्दरः ॥८३२॥
कोटिमूल्यमिदं रत्नमर्पणीयं पितुर्मम । गतेन नगरे स्वीये भवता धननैगम ! ॥८३३॥
लगिष्यन्ति धना घस्राः कुर्वन्तः क्रयविक्रयम् । ममात्र नगरे भूरिक्रयाणाङ्गीकरणतः ॥८३४॥
एवमुक्त्वा मणिं तस्मै दत्त्वाऽस्थात्तत्र सुन्दरः । धनो भूरिधनोऽम्भोधिपथा स्वपुरमाययौ ॥८३५॥
मिलितोऽपि धनो भीमश्रेष्ठिनोऽभ्येत्य सद्मनि । माणिक्यं न ददौ लोभपिशाचग्रसिताशयः ॥८३६॥ यतः–
"लोभभूताभिभूतः सन् जनः सुकुलजः पुनः । कृत्याकृत्यं न जानाति न देवं न गुरुं स्फुटम् ॥८३७॥
लोभमूलानि पापानि रसमूलाश्च व्याधयः । स्नेहमूलानि दुःखानि त्रीणि त्यक्त्वा सुखी भव ॥८३८॥
धनहीनः शतमेकं सहस्रं शतवानपि । सहस्राधिपतिर्लक्षं कोटिं लक्षेश्वरोऽपि च" ॥८३९॥–इत्यादि योगशास्त्रे।
अन्येद्युरर्जितासंख्यधनोऽम्भोधिपथा क्रमात् । आययौ स्वपुरं नानोत्सवं सुन्दरनैगमः ॥८४०॥
क्रयाणकानि सर्वाणि समुत्तार्य शनैः शनैः । सुन्दरः पितरं रत्नार्पणोदन्तं पप्रच्छ च ॥८४१॥
ममार्पितं न तेनेति पित्रोक्ते सुन्दरस्तदा । ययाचे च धनं रत्नं कोटिमूल्यं मनोहरम् ॥८४२॥
धनः प्राह मया दत्तं रत्नं पित्रे तव स्फुटम् । सुन्दरोऽवक् च कः साक्षी विद्यतेऽत्राधुना वद ॥८४३॥
धनो जगौ द्विजः साक्षी ममास्ति श्रीधराभिधः । पिता तव कथंकारं ह्नुते मदर्पितं मणिम् ॥८४४॥ यतः–
"अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥

॥ २६७ ॥

दन्तैरुच्चलितं धिया तरलितं पाण्यंह्रिणा कम्पितम् , दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया मोषितम् ।
प्राप्ताया यमभूपतेरिह महाधाट्यां जरायामियम् , तृष्णा केवलमेककैव सुभटी हृत्पत्तने नर्त्यते" ॥८४६॥
धनोऽभ्येत्याशु सदने आकार्य श्रीधरद्विजम् । दत्त्वा दीनारदशकं प्रोवाचेति रहस्तदा ॥८४७॥
सुन्दरेणैकमाणिक्यं पुरा दत्तं ममानघम् । अवलुप्तं मया लोभात्कूटजल्पनतोऽधुना ॥८४८॥
भीमस्यानेन माणिक्यमर्पितं मम पश्यतः । भवतेत्यत्र वक्तव्यं भूपतेरग्रतः स्फुटम् ॥८४९॥
पुनर्दीनारदशकं तुभ्यं दास्याम्यहं रहः । सिद्धे कार्ये मदीयेऽस्मिश्चिन्तिते श्रीधर द्विज ॥८५०॥
अग्रतोऽप्यावयोः प्रीतिर्भविष्यति च निश्चला । ओमिति श्रीधरेणोक्ते हृष्टोऽभूद्धननैगमः ॥८५१॥
पिता प्राह सुतेदानीं वक्तुं नैव वरं तव । परस्वहरणे दुःखं भवत्यत्र परत्र च ॥८५२॥
"दौर्भाग्यं प्रेष्यतां दास्यमंगच्छेदं दरिद्रताम् । अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् ॥८५३॥
पतितं विस्मृतं नष्टं स्थितं स्थापितमाहितम् । अथ तं नाददीत स्वं परकीयं क्वचित् सुधीः ॥८५४॥
अयं लोकः परलोको०॥ एकस्यैकं क्षणं दुःखं मार्यमाणस्य" ०॥ इत्यादि योगशास्त्रे ॥८५५॥
एवमुक्तोऽपि च धनोऽवगणय्य पितुर्वचः । आकार्य श्रीधरं राज्ञः पार्श्वेऽगात्सुन्दरान्वितः ॥८५६॥
सुन्दरोऽवग् मया स्वामिन्नेकं माणिक्यमर्पितम् । अनेनापह्नुतं लोभात् धनेनेह कुबुद्धिना ॥८५७॥
आकार्य भूपतिर्बुद्धिसागरं मतिसागरम् । प्रोवाचेत्यनयोर्वादं भिन्द्धि बुद्धिविधानतः ॥८५८॥

बुद्धिं विना नरो नैव प्रतिष्ठां लभते तथा । लक्ष्मीं विना नरो नैव प्रतिष्ठां लभते यथा ॥८५९॥ यतः–
वरं बुद्धिर्न सा विद्या विद्यातो बुद्धिरुत्तमा । बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥८६०॥ तथाहि–
विदेशं प्रति चत्वारो विद्यार्थिनो रमापुरात् । चलन्तोऽध्वनि जल्पन्ति स्मेति तत्र त्रयः स्फुटम् ॥८६१॥
शेमुषीतोऽधिका विद्या विद्यते नात्र संशयः । विद्यावान् मान्यते भूपैर्महेभ्यैरपि सर्वतः ॥८६२॥ यतः–
"विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते" ॥८६३॥
एकोऽवग् बुद्धिमान् बुद्धिर्विद्यातो विद्यतेऽधिका । बध्यन्ते श्री(धी)मता भूपाः शूरा दुर्गगता अपि ॥८६४॥ यतः–
"यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः" ॥ अत्र शशकस्य कथा ।
मार्गे सिंहं मृतमाय दृष्ट्वा शास्त्रधरो जगौ । वराकोऽयं श्वसन् सज्जीक्रियते मासदानतः ॥८६६॥ यतः–
"ज्ञानवान् ज्ञानदानेन निर्भयोऽभयदानतः । अन्नदानात्सुखी नित्यं निर्व्याधिर्भेषजाद्भवेत्" ॥८६७॥
बुद्धिमान् प्राह सिंहेऽस्मिन् दुष्टे सज्जीकृते स्फुटम् । भविष्यति महानर्थो मरणान्तोऽत्र वो द्रुतम् ॥८६८॥ यतः–
"वेश्याऽश्वा नृपतिश्चौरो नीरमार्जारदंष्ट्रिणः । जातवेदाः कलादाश्च न विश्वास्या इमे क्वचित्" ॥८६९॥
ततो बुद्धिमता भूयः शास्त्रज्ञा वारितास्त्रयः । अस्थिमासादिना सिंहं सज्जं कुर्वन्ति यावता ॥८७०॥
तावत्पूर्वं महानर्थं विज्ञाय बुद्धिमान् द्रुतम् । दूरदेशं ययौ नंष्ट्वा हितं वाञ्छन् निजात्मनः ॥८७१॥
तैश्च सज्जीकृतः सिंहः क्षुधितः श्राक् चपेटया । शास्त्रज्ञांस्तदा हत्वा तृप्तोऽभूद् बहुकालतः॥८७२॥ "वरं बुद्धि०॥"

॥ २६९ ॥

मन्त्री धनं प्रति प्राह साक्षी रत्नार्पणेऽस्ति कः । धनोऽवग् द्विजः साक्षी श्रीधरोऽयं पुरो मम ॥८७३॥
मन्त्री मत्यम्बुधिः प्राह भो भो श्रीधर ! वाडव । कियत्प्रमाणं माणिक्यं त्वया दृष्टं पुरा वद ॥८७४॥
श्रीधरो वाडवो दध्यौ कोटिमूल्यो मणिः स्फुटम् । घटप्रमाण एवेह भविष्यति न संशयः ॥८७५॥
घटप्रमाणमाणिक्यमित्युक्ते श्रीधरेण च । मन्त्री प्रोवाच माणिक्यं बध्यते क्व वद द्विज ॥८७६॥
विमृश्य वाडवः प्राह बध्यते कर्णकण्ठयोः । मन्त्री प्राह त्वया सत्यं मनाग् नैव प्रजल्पितम् ॥८७७॥
घटप्रमाणमाणिक्यं कर्णे कण्ठे कदापि न । केनचिद् बध्यते पुंसा ततस्ते कूटसाक्षिता ॥८७८॥
कुट्टापितो द्विजोऽत्यन्तं कशाघातैर्महीभुजा । असत्यवचनाद्यावज्जीवं दुःख्यभवद् भृशम् ॥८७९॥ यतः–
"असत्यवचनाद्वैर-विषादाप्रत्ययादय०॥ निगोदेष्वथ तिर्यक्षु तथा ०॥ ब्रूयाद् भियोपरोधाद्वा नासत्यं ०॥८८०॥
ततो रुष्टो नृपो हृत्वा धनस्य निखिलां श्रियम् । माणिक्यं दापयामास सुन्दराय स्फुरद्द्युति ॥८८१॥
ततो धनो वणिक् पश्चात्तापतप्ततनुर्भृशम् । मरणावधि दारिद्र्यपूरितोऽजनि दुःखितः ॥८८२॥
एवं कुर्वन्ति येऽकार्यं अविमृश्य जना नृप ! । ते तावद् दुःखिनो लोके जायन्ते नात्र संशयः ॥८८३॥
प्रतीक्षस्व क्षणं स्वामिन् ! करिष्येऽहं तवोदितम् । भूपो दध्यावयमपि सहस्रधीसमोऽजनि ॥८८४॥
तृतीयप्रहरप्रान्ते विसृज्य सेवकं च तम् । कोटिबुद्धिं समाकार्य भूपालः प्राह पूर्ववत् ॥८८५॥
श्रुत्वैतत्कोटिधीरेतज्जगाद भूपतेः पुरः । स्वामिन्नेष्यति ते निद्रा कदाचित्साम्प्रतं द्रुतम् ॥८८६॥

अविचारित
कार्ये धन-
कथा ।

॥ २७० ॥

पूर्वं विरोधिताः सन्ति भूरिशो विद्विषस्तत्र । तेन गन्तुं मनो नैव दत्ते मम मनागपि ॥८८७॥
राजा प्राह नज स्वस्थो जागरिष्याम्यहं स्फुटम् । त्वं चादेशमिमं कृत्वा ममात्रागच्छ वेगतः ॥८८८॥ यतः—
"एकाकिनोऽपि सिंहस्य कानने विपुले स्फुटम् । जायते किं भयं विघ्नं परतः श्वापदान्नरात् ॥८८९॥
श्रुत्वैतत्कोटिधीर्दध्यावेय नूनं महीपतिः । विपरीतमतिर्जात ईदृक्षजल्पनादिह ॥८९०॥
शतबुद्धिर्यतो वर्यगुणमाणिक्यरोहणः । प्रतिकूलं न कस्यापि कुरुते स्म कदाचन ॥८९१॥
प्रतीक्षस्व क्षणं स्वामिन् ! करिष्यामि वचस्तव । आदावेकां कथां कथ्यमानां सम्यग् मया शृणु ॥८९२॥
भूमीपतिर्जगौ जल्प कथां कार्यं ततः कुरु । कोटिबुद्धिस्ततः सद्यः प्रोवाचेति कथामिमाम् ॥८९३॥
आसील्लक्ष्मीपुरे विप्रः केशवाढ्यो रमाकृते । कुर्वन्नुपक्रमं भूयोऽभवद् दारिद्र्यवान् भृशम् ॥८९४॥
आरोहतु गिरिशिखरं समुद्रमुल्लङ्घ्य यातिं (तु) पातालम्०॥
अन्येद्युर्गृहिणी प्राह कान्त ! धान्यं विना भृशम् । सीदावस्तेन लक्ष्म्यर्थं गम्यते दूरदेशतः ॥८९५॥ यतः—
"यस्यास्ति वित्तं स नरः कुलीनः, स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता जनमाननीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥८९६॥
सुभीताः परदेशस्य बह्वालस्याः प्रमादतः । स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः" ॥८९७॥
यो न निर्गत्य निःशेषामवलोकयति मेदिनीम् । अनेकाश्चर्यसम्पूर्णां स नरः कूपदर्दुरः" ॥८९८॥

अविमृश्य कार्ये केशव-कथा ।

॥ २७१ ॥

विमृश्येति मियां पृष्ट्वा वार्द्धिमार्गेण केशवः। ययौ श्रीनगरे लक्ष्मीकृते कष्टेन पीडितः ॥८९९॥
परगेहेषु कर्माणि कुर्वन् तत्रापि नित्यशः। पूर्वभाग्योदयाद् दुःखी जातोऽत्यन्तं च केशवः ॥९००॥
३ दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवे गर्भवासे नराणाम्, बालत्वे चापि दुःखं मलकलिततनुः स्त्रीपयःपानमिश्रम्।
तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावेऽपि दुःखम्, संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित्" ॥
जाते वर्षत्रये भ्राम्यन् ययौ चण्डीनिकेतने। स्फारं पाषाणमादाय जजल्पेति पुनः पुनः ॥९०२॥
६ मह्यं देहि श्रियं देवि नो हि चेदश्मनाऽमुना। मूर्तिं चूर्णीकरिष्येऽहं तावकीनामिमां द्रुतम् ॥९०३॥
बिभ्यती निर्जरी प्राह भाग्यं नास्ति मनाक् तव। दत्तं स्थास्यति नो तावकीने हस्ते मनागपि ॥९०४॥
द्विजः प्राह स्तं देवि! तव चैतैर्वचोभरैः। देहि श्रियं न चेन्मूर्तिं करिष्यामि द्विधाऽधुना ॥९०५॥
९ बिभ्यती निर्जरी तस्मै कोटिमूल्यं मणिं ददौ। द्विजोऽपि मुदितोऽम्भोधिमार्गेण वाहनेऽचटत् ॥९०६॥
चञ्चत्प्रभोदयं पूर्णं चन्द्रं वीक्ष्य द्विजस्तदा। हस्ते कृत्य मणिं दीप्रदीधितिं ध्यातवानिति ॥९०७॥
माणिक्यचन्द्रयोर्मध्ये कोऽस्ति भास्वरदीप्तिमान्। एवं पुनः पुनः कुर्वन् यावत्तिष्ठति वाडवः ॥९०८॥
१२ तावच्छयान्मणिर्वार्द्धौ पपाताभाग्ययोगतः। ततस्तावद् द्विजः पश्चात्तापभागजनिष्ट सः ॥९०९॥
एवं कुर्वन्ति ये कार्यमविमृश्य जना मनाग्। तेऽतीव दुःखिनो लोके जायन्ते नात्र संशयः ॥९१०॥
प्रतीक्षस्व क्षणं स्वामिन्! करिष्येऽहं तवोदितम्। भूपो दध्यावयमपि लक्षबुद्धिसमोऽजनि ॥९११॥

अविमृश्य कार्ये केशव कथा।
॥ २७२ ॥

भगे तलारमाकार्य प्रोवाचेति क्षमापतिः । शूलाया क्षेपण कार्यं त्वया शतमतेर्द्रुतम् ॥९१२॥
सहस्रलक्षकोटिभ्यो मतीना तत्क्षणात्तदा । देशत्याग ददौ मातः क्रुद्धो विक्रमभूपतिः ॥९१३॥ यतः–
"माता यदि विष दद्यात् पिता विक्रयते सुतम् । राजा हरति सर्वस्वं का तत्र परिदेवना ॥९१४॥
दुर्द्धरा भूपतेराज्ञा दुर्धर वह्निवेशनम् । सिंहस्यास्ये करक्षेपो दुर्द्धरो देहिना भवेत्" ॥९१५॥
शतबुद्धिं तलारक्षः शूलाया क्षेप्तुमञ्जसा । राजादेशाद् बहिर्देशं यावद् गच्छति निर्दयः ॥९१६॥
तावच्छतमतिः प्राह भो तलाराशिरोमणे ! । मया विनाशितं भूमीपतेः किमपि नाधुना ॥९१७॥
अविचार्यायमुर्वीशो यदि मां मारयिष्यति । तथापि भूपतेः पार्श्वे नेतव्योऽहं त्वयैकशः ॥९१८॥
शतबुद्धिर्नृपोपान्ते गत्वा खण्डानि भोगिनः । आनीय रात्रिवृत्तान्तं निखिलं प्रोक्तवान् स्फुटम् ॥९१९॥
ततः शतमतेर्वीक्ष्य चातुर्यं स्वामिभक्तताम् । सद्यो नृपो ददौ देशान् भूरिशस्तोषिताशयः ॥९२०॥
त्रयाणा सहस्रबुद्ध्यादिकाना मन्त्रिणा तदा । वर्धयामास भूपालो ग्रास पुर्यादिदानतः ॥९२१॥ यतः–
"धवलान्यातपत्राणि वाजिनश्च मनोरमाः । सदा मत्ताश्च मातङ्गाः प्रसन्ने भूपतौ सति ॥९२२॥
राजा तुष्टोऽपि भृत्यानामर्थमात्र प्रयच्छति । तेऽपि सन्मानमात्रेण प्राणैरप्युपकुर्वते" ॥९२३॥
ततः श्रीविक्रमादित्यो भट्टमात्रादिसेवकैः । सेव्यमानो नयाद् भूमिं पालयामास नित्यशः ॥९२४॥ यतः–
"दुष्टानां दमन नयानुगमन स्वीयप्रजापालनम्, नित्यं देवमहर्षिपादनमनं षट्दर्शनीमाननम् ।

॥ २७३ ॥

औचित्याचरणं परोपकरणं त्यागं सभोगं श्रियाः, कुर्वाणो नृपतिः श्रिया निजपतिः सत्यैव सेवा मता" (?) ॥९२५॥
अन्येद्युर्विक्रमादित्यः सभायां यावदासितः । तावत्कोऽपि द्विजोऽभ्येत्य काव्यमेकं जगौ स्फुटम् ॥९२६॥
"मरुत्तटिन्याः किल वालुकानां, सरित्पतेर्वारिपृषन्मणीनाम् । नभस्युडूनां च शरीरिणां च, विज्ञायते नैव बुधेन संख्या"॥
तस्मिन्नवसरे कश्चिदन्यो वा पण्डितो जगौ । स्वामिन्नेकं स्फुटं काव्यं श्रूयतां भवताधुऽना ॥९२८॥
विक्रमार्कनृपः प्राह जल्प पण्डितशेखर ! । उच्चैः स्वरं जगौ काव्यमिदं संसदि कोविदः ॥९२९॥
"अश्वप्लुतं माधवगर्जितं च, स्त्रीणां चरित्रं भवितव्यता च । अवर्षणं चापि सवर्षणं च, देवा न जानन्ति कुतो मनुष्याः" ॥
विक्रमार्को जगौ विद्वन् ! नेदृग् युक्तं वचस्तव । नारीणां ज्ञायते पारश्चरित्रस्य हि कोविदैः ॥९३१॥
ततस्तं पण्डितं कारागारे क्षिप्त्वाऽथ विक्रमः । उत्तराभिमुखोऽचालीद् ज्ञातुं स्त्रीचरितं तदा ॥९३२॥
क्रामता तेन भूपीठं शिखरे कस्यचिद्गिरेः । कायोत्सर्गस्थितो नासान्यस्तदृक् साधुरीक्षितः ॥९३३॥ यतः—
"आयावयंति गिम्हेसु हेमंतेसु अ वाउडा । वासासु प्पडिसंलीणा संजया सुसमाहिआ" ॥९३४॥
विक्रमादित्यभूमीशं विज्ञाय ज्ञानतो यतिः । तन्नाम्ना लापयामास स धर्माशीर्वादपूर्वकम् ॥९३५॥
उपदेशे मुनीन्द्रेण दत्ते प्राहेति भूपतिः । मह्यं विद्यामपूर्वां त्वं प्रसद्य देहि सत्तम ! ॥९३६॥
मनःकामनया शुद्धया रञ्जितः साधुना नृपः । नत्वा स्तुत्वाऽग्रतोऽचालीत् तत्परीक्षणहेतवे ॥९३७॥
पश्यन् बहून् पुर-ग्रामा-कर-सिन्धु-नगान् नृपः । जगाम वसुधाभूपामणिं लक्ष्मीपुरं परम् ॥९३८॥

स्त्रीचरितं वीक्षितुं विक्रमस्य लक्ष्मीपुरं प्रति गमनम् ।

विलोकयन् पुरच्छाया द्यूतकृत्स्थानकेऽगमत् । स्थित्वैक प्रहरं यावदचलदग्रतो नृपः ॥९३९॥
द्यूतकृत् क्षत्रियो ज्ञात्वा सदाकार च त नरम् । गच्छन्त स्ववलात् सद्यो भोजनाय न्यमन्त्रयत् ॥९४०॥
अतिथेरात्मनश्चापि भोजन प्रवर तदा । प्रेष्य स्व सेवक गेहे तेन रधापितं स्फुटम् ॥९४१॥
दीव्यतो द्यूतकृत्पुसो भोजन विस्मृत पुनः । भार्याया प्रेपितः प्रेष्यः पत्युः पार्श्वेऽदनाय च ॥९४२॥
रममाणेन तेनाथ प्रेपितोऽभ्यागतो गृहे । तत्प्रिया तं नर प्रेक्ष्य पञ्चबाणेन पीडिता ॥९४३॥ यतः–
"जर्जरिते सति हृदये स्मरकौसुमशरसघातसन्तापैः । जलमिव गलति विवेकः कृत्याकृत्येषु लोकस्य" ॥९४४॥
प्रक्षाल्य चरणौ भोक्तुमुपविष्टोऽतिथिस्तदा । शालिदालिघृतं पर्य(रि)वेष्य दध्याविति प्रिया ॥९४५॥
यद्यय पुरुषो भर्ता मम नून भविष्यति । गोत्रदेव्यैर्वलिं सद्यः तदा दत्सेऽहमद्भुतम् ॥८४६॥
तदा त पुरुष वीक्ष्य रूपवन्तं च तत्क्षणात् । क्षत्रियगृहिणी मोहपिशाचग्रसिताऽभवत् ॥९४७॥ यतः–
"दिवा पश्यति नो घूकः काको नक्त न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥९४८॥
धत्तूरितो जनो यद्वत्पश्येत्काचनमज्जगत् । तथा कामान्धितो जीवोऽखिलं नारीमयं जगत् ॥९४९॥
मनःकामनया शुद्धया ज्ञात्वा तस्या मनोगतम् । माहेति भूपतिर्नारि ! कुरुष्व त्वं यथारुचि ॥९५०॥
मां विगोपयिता ह्येप नरो ध्यात्वेति भामिनी । बुम्बारवं चकाराशु जल्पन्ती च यथा तथा ॥९५१॥
जातशङ्कोऽथ त हन्तुं यावदायाति द्यूतकृत् । तावच्च तत्प्रिया दध्यावतिथेर्मरण वृथा ॥९५२॥ यतः–

॥ २७५ ॥

"क्षणं सक्तः क्षणं मुक्तः क्षणं क्रुद्धः क्षणं क्षमी । मोहाद्यैः क्रीडयेवाहं कारितः कपिचापलम्" ॥९५३॥
चुल्लीतोऽलातमादाय तीव्रं प्रज्वालितं तया । ततो जजल्प भो लोका गृहं ज्वलति धावत ॥९५४॥
३ ज्वलन्तं सदनं विध्यापयन्तरातिथिं तदा । निरीक्ष्य द्यूतकृत्खड्गं कोशमध्येऽक्षिपत्तदा ॥९५५॥
तयेति हक्कितो भर्ता यद्ययं पुरुषोत्तमः । नागमिष्यत्तदा सर्वं गृहं भस्म्यभवन्ननु ॥९५६॥
ततः स्त्रीचरितं ज्ञात्वा गत्वा निजनिकेतने । भूरिद्रव्यप्रदानेन मानयामास पण्डितम् ॥९५७॥
६ एकां कोटिं सुवर्णस्य कोषाध्यक्षसमीपतः । दापयामास भूपालस्तस्मै विक्रमभानुमान् ॥९५८॥
विक्रमादित्यभूमीशस्तं काव्यार्थं हृदि स्मरन् । सुखेन गमयामास कालं दानं ददद् नृणाम् ॥९५९॥
इतोऽजनि प्रतिष्ठानपुरे श्रीशालिवाहनः । बलिष्ठेभतुरङ्गादिवर्यलक्ष्म्या बली क्रमात् ॥९६०॥
९ द्विपंचाशच्छ्यस्फारशिलोत्पाटयिता बली । भूपस्य सेवकोऽनर्घ्यो बभूव शूद्रकाभिधः ॥९६१॥
अन्येऽप्येवंविधाः शूरा बलिनः सेवकाः क्रमात् । जाता एकोनपञ्चाशत् तस्य भूमीपतेः पुनः ॥९६२॥
अत्र शालिवाहनसम्बन्धः कियान् वाच्यः ।

विक्रमस्य शालिवाहनेन समं युद्धम् ।

१२ अन्यदा विक्रमार्कस्य शालिवाहनभूपतिः । ग्रामाणि कतिचिद् हत्वा जगाम नगरं निजम् ॥९६३॥
भट्टमात्रो जगौ स्वामिन् ! शालवाहनभूपतिः । निहत्यात्मीयग्रामाणि याति यत्तन्न सुन्दरम् ॥९६४॥
चल्यते कटकं कृत्वा विजेतुं शालवाहनम् । सामर्थ्ये सति को मर्त्यः सहतेऽन्यपराभवम् ॥९६५॥

॥ २७६ ॥

न्यत्कारं सहते सिंहोऽन्येषां नैव कदाचन । पराभवं सहन्ते हि शृगालाः कातराशयाः ॥९६६॥
भूपः प्राह त्वया सत्यं प्रोक्तं मन्त्रीश ! साम्प्रतम् । उपायानां चतुष्केण कार्यं कुर्वन्ति भूभुजः ॥९६७॥
साम्ना च यदि सिद्ध्येत कार्यं भूमीपतेर्द्रुतम् । तदा किं क्रियते दामो जीवकष्टविधायकः ॥९६८॥
दामेन यदि सिद्ध्येत कार्यं भेदेन किं तदा । भेदेन यदि सिद्ध्येत कार्यं दडेन किं तदा ॥९६९॥
ततोऽवग् मन्त्रिराट् दूतः प्रेष्यते प्रथमं वरः । न मन्यते यदा दूतवचनं सालवाहनः ॥९७०॥
तदा च क्रियते सद्यस्तं विजेतुमुपक्रमः । विमृश्येति महीशेन दूतोऽचालि रिपु प्रति ॥९७१॥
प्रतिष्ठानपुरे गत्वा सालवाहनससदि । दूतः स्फुट जगादेति विक्रमार्कनृपोदितम् ॥९७२॥
विक्रमार्कनृपग्रामा भग्नाश्च यत्त्वयाऽधुना । वरं तन्न कृतं सालवाहनक्षोणिनायक ! ॥९७३॥
आगत्य तस्य भूपस्य विक्रमार्कस्य साम्प्रतम् । मिलित्वा क्षम्यतां सौवापराध विमृशं विना ॥९७४॥
नो चेत् श्रीविक्रमादित्यः सन्नह्य कटकं द्रुतम् । एष्यत्यत्र भवन्तं च विजेतुं सालवाहन ! ॥९७५॥
श्रुत्वैतद् भृकुटीं कृत्वा सालवाहनभूपतिः । प्राह दूत ! किमुक्तेनानेनैव भवताऽधुना ॥९७६॥
भवतः सपदि स्वामी समागच्छतु सम्मुखम् । युद्धाय कटक लात्वाऽहकमेष्यामि वेगतः ॥९७७॥
ततो दूतो द्रुतं गत्वा विक्रमार्कनृपान्तिके । प्राहेति कटकं कृत्वा चल्यता साम्प्रतं प्रभो ! ॥९७८॥
सालवाहनभूपालस्तृणमन्यो जगत्त्रयम् । न मन्यते तृणाय त्वां विक्रमार्कनृपाधुना ॥९७९॥

॥ २७७ ॥

श्रुत्वैतद्विक्रमादित्यः सन्नह्य तत्क्षणात्तदा । भूरिसैन्ययुतोऽचालीत् प्रतिष्ठानपुरं प्रति ॥९८०॥
सेवकेभ्यो महीशेन दत्ता लक्ष्मीश्च भूयसी । भृत्या भूपतिसन्मानं लब्ध्वाऽभूवन् प्रमोदिताः ॥९८१॥ यतः–
"विग्रहमिच्छन्ति भटा वैद्याश्च व्याधिपीडितं लोकम् । मृतकबहुलं च विप्राः क्षेमसुभिक्षं च निर्ग्रन्थाः" ॥९८२॥
अनेकमत्तमातङ्ग-वाजि-वीरविराजितम् । अन्तरा मिलितं सैन्यं द्वयोर्भूमीभुजोस्तदा ॥९८३॥
रथी च रथिना सार्धं सादी च सादिना सह । पदिकाः पदिकैः सार्धं निषादी च निषादिना ॥९८४॥
खड्गी च खड्गिना सार्धं कुन्ती च कुन्तिना सह । वर्मिता वर्मितैः सार्धं तूणी च तूणिना समम् ॥९८५॥
शाक्तिकेन च शाक्तिकः पत्री च पत्रिणा समम् । वाणिको वाणिना सार्धं दण्डिकेन च दण्डिकः ॥९८६॥
इत्यादि विग्रहो वाढं बभूव बलयोर्द्वयोः । दारुणश्च तदा देवा अपि द्रष्टुं समागमन् ॥९८७॥
एवं च कुर्वतोर्युद्धं विक्रमार्कस्य वक्षसि । तीक्ष्णो लग्नः शरो मुक्तः सालवाहनभूभुजा ॥९८८॥
तदानीं च चमूमध्ये श्रीविक्रमार्कनरेश्वरम् । भट्टमात्रादयः मोचुर्मन्त्रीशा इति तत्क्षणम् ॥९८९॥
आर्तध्यानं न कर्तव्यं स्वामिन्नत्र त्वया मनाग् । दुर्ध्यानेन यतो जीवा लभन्ते कुगतिं द्रुतम् ॥९९०॥ उक्तं च–
"आर्ते तिर्यग्गिति तथा गतिरधो ध्याने च रौद्रे सदा । धर्मे देवगतिः"० ॥९९१॥
श्रीविक्रमचरित्रं तु भवन्तमिव सन्ततम् । वयं हि वरिवस्यामः कल्याणीभक्तिपूर्वकम् ॥९९२॥
ततः श्रीविक्रमादित्यः शुभध्यानपरायणः । ध्यायन् पञ्चनमस्कारं प्राप स्वर्गसुखं तदा ॥९९३॥ यतः–



विक्रमस्य मृत्युः ।

"तारचन्द्रबल ततो ग्रहबलं तारानलं भूबलम्०" ॥९९४॥
श्रीविक्रमचरित्रोऽथ द्वितीयवासरे मगे । सालवाहनभूपेन रण कर्तुं प्रवर्तितः ॥९९५॥
श्रीविक्रमचरित्रेण सालवाहनभूपतेः । क्षणमात्राच्चमूर्भग्ना नष्टाः सर्वे दिशोदिशम् ॥९९६॥
मेल कृत्वा ततः सालवाहनो मेदिनीपतिः । जगाम नगर सौवं विक्रमादित्यसूनुना ॥९९७॥
श्रीविक्रमचरित्रोऽथ निजपुर्यां समागतः । न मुञ्चति मनाक् शोकं पितुर्मरणदुःखितः ॥९९८॥
सिद्धसेनगुरुस्तत्रागत्य शोकच्छिदे तदा । उपदेशं ददावेवं विक्रमार्कसुतं प्रति ॥९९९॥
धर्म–शोक–भया–हार–निद्रा–काम–कलि–क्रुधः । यावन्मात्रा विधीयन्ते तावन्मात्रा भवन्त्यमी ॥१०००॥
"तित्थयरा गणहारी सुरवइणो चक्कि–केसवा रामा । संहरिआ हयविहिणा सेसेसु जीएसु का गणणा" ॥१००१॥
शत्रुञ्जयादितीर्थेषु येन यात्रा कृता घनाः । अनृणा विहिता भूश्च तस्य शोकः कथं भवेत् ॥१००२॥
भुक्त्वा स्वर्गसुख च्युत्वा ततो विक्रमभानुमान् । स्तोकैरेव भवैर्मोक्षसौख्यमादर्शयिष्यति ॥१००३॥ पाठान्तरम्–
अन्येद्युर्विक्रमादित्यः सम सालमहीभुजा । कुर्वाणः समर भग्नः खिन्नः स्वपुरमीयिवान् ॥१००४॥
विषादेनोदरव्याधिर्विक्रमस्य तथाऽजनि । यथा नैक क्षणं स्वास्थ्यं लभते कर्मयोगतः ॥१००५॥
स्मृतेऽपि वह्निवेताले नागते भिषजो जगुः । यत्राति काकमांसं त्वं तदा रोगः प्रयात्यरम् ॥१००६॥
भक्षिते काकमांसेऽपि जीवितव्यकृते तदा । नागाद्रोगः क्षयं भूमीपतेर्दुष्कर्मयोगतः ॥१००७॥ उक्तं च लोकैः–

॥ २७९ ॥

विक्रमस्य मृत्युः।

"खद्धो काओ मुक्कं च साहसं विनडिअं अप्पाणं । अजरामरं न हूअं हा विक्कम ! हारिओ जम्मो" ॥१००८॥
सिद्धसेनगुरुस्तत्राभ्येत्य भूपान्तिके जगौ । राजन्न क्रियते खेद उत्तमैरापदि स्थितैः ॥१००९॥
धनेषु जीवितव्येषु स्त्रीषु चाहारकर्मसु । अतृप्ताः प्राणिनः सर्वे याता यास्यन्ति यान्ति च ॥१०१०॥
श्रुत्वेति विक्रमादित्यः सिद्धसेनार्यसंनिधौ । आराधनां विधायान्ते मृत्वा स्वर्गं समीयिवान् ॥१०११॥
श्रीविक्रमचरित्रस्य पितृमृत्युसमुद्भवम् । शोकं धर्मोपदेशेनोत्तारयामास सूरिराट् ॥१०१२॥
श्रुत्वेत्यादि गुरोर्वाक्यं विक्रमचरितस्तदा । मुक्त्वा शोकं द्रुतं मृत्युकृत्यं तस्य पितुर्व्यधात् ॥१०१३॥

इति श्रीमत्तपागच्छनायक–श्रीसोमसुन्दरसूरिपट्टालंकरण–श्रीमुनिसुन्दरसूरि–शिष्यपण्डितशुभशीलगणिविरचिते श्रीविक्रमादित्य–विक्रमचरित्रचरित्रे श्रीविक्रमादित्यस्वर्गगमनो नामैकादशः सर्गः समाप्तः ॥



# अथ द्वादशः सर्गः ।

श्रीविक्रमचरित्र तु मन्त्रिणो भूपविष्टरे । न्यस्यन्ति यावता तावत्प्रोचुस्ता पुत्रिका इति ॥१॥
अस्यास्मिन् योग्यता नास्त्युपवेष्टुं सिंहविष्टरे । विक्रमादित्यभूपालतुल्यत्वाभावतः खलु ॥२॥
३ श्रुत्वा तासां वचः प्रोचुरिति मन्त्रीश्वरा मिथः । एताः सिंहासनाधिष्ठायिका देव्यो वदन्ति च ॥३॥ यतः--"अमन्त्रमक्षरं"०॥
तैः पृष्टं पुत्रिका ! ब्रूत विष्टरस्य च का गतिः । ताः प्रोचुरधुना भूमौ विष्टरं स्थापयन्तु च ॥४॥
देवताधिष्ठितं वाक्यं श्रुत्वा मन्त्रीश्वरास्तथा । पुत्रिकासहितं सिंहासनमस्थापयन् क्षितौ ॥५॥
६ ततोऽन्यस्मिन् महासिंहविष्टरे न्यस्य मन्त्रिणः । श्रीविक्रमचरित्रं तु नमश्चक्रुः प्रमोदिताः ॥६॥
[× विक्रमादित्यभगिनी समेत्य भ्रातृजं तदा । लाजैर्वर्धाप्य मुदिता प्रोवाचेति च मंगलम् ] ॥७॥
विक्रमादित्यभूपालतुल्यस्त्वं भवताचिरम् । औदार्य-धैर्य-गाम्भीर्य-स्थैर्यप्रमुखसद्गुणैः ॥८॥
९ श्रुत्वैतद्वाग्धराश्च ततो जहसुस्तदा । राजा प्राह भवन्तीभिर्ब्रूत किं हसितं मनाग् ॥९॥
आयाऽवग् विक्रमार्कस्यैकैकं चरित्रमद्भुतम् । वर्णितुं शक्यते नैव तत्तुल्यं त्वं कथं भवेः ॥१०॥

× अयं श्लोकः क-खपुस्तके नास्ति ।

॥ २८१ ॥

राज्ञोक्तं विक्रमार्कस्य चरित्रं ब्रूत किञ्चन । सा प्रोवाचैकदा यावद्विक्रमः पर्षदि स्थितः ॥११॥
तावत् शुकयुगं तस्यास्तोरणे समुपागमत् । नृभाषया शुकी प्राह स्वामिन्नेषा पुरी वरा ॥१२॥
३ शुकोऽवग् यत्र यास्याव आवां तत्र पुरे गृहम् । रण्डाया अपि भूपस्यास्य गेहादस्ति सुन्दरम् ॥१३॥
एवमुक्त्वा शुकद्वन्द्वमुड्डीयाशु गतं क्वचित् । श्रुत्वैतद् भूपतिर्द्रष्टुं तत्पुरं त्वरितोऽजनि ॥१४॥
भट्टमात्राग्निवेतालादीनामग्रे नृपो जगौ । शुकोक्तं नगरं मत्वा भवद्भ्यां कथ्यतां मम ॥१५॥
६ भट्टमात्राग्निवेतालौ प्राप्यादेशं महीपतेः । भ्रमन्तौ सर्वतः शश्वत् गतौ तिलङ्गसिमनि ॥१६॥
तिलङ्गदेशभूभागभालैकभूषणेऽनघे । श्रीपुरे सप्तमासान्ते भ्रमन्तौ ययतुश्च तौ ॥१७॥
तत्रासीद् भूपतिर्भीमनामा न्यायपरो बली । पत्नी पद्माऽभिधा पुत्री तस्याभूत् सुरसुन्दरी ॥१८॥
९ सर्वकलाब्धिपारीणा चतुरा शीलशालिनी । चारुबुद्धिर्लसद्रूपजितस्वर्गिपुराङ्गना ॥१९॥
स्वर्गतुल्ये पुरे तस्मिन् स्थाने स्थाने पुरश्रियम् । पश्यन्तौ तोरणासीनं शुकयुग्मं ददर्शतुः ॥२०॥
शुकोऽवग् भो प्रियेऽवन्त्यां या पुरी वर्णिता मया । सैवेयं नगरी स्वर्गिविमानादतिसुन्दरा ॥२१॥
१२ श्रुत्वैतन्मुदितौ भट्टमात्राग्निकौ द्रुतं तदा । दृष्ट्वा पुरीं गतौ चक्रेश्वर्या देव्या निकेतने ॥२२॥
क्षणैकेन कनी काचिद् रूपाञ्जितसुराङ्गना । सुखासनसमासीना सखीजनयुता ययौ ॥२३॥
तत्रागत्य सुरीं नत्वा यान्ती सख्यन्तिकात्कनी । भट्टमात्राग्निवेतालावानिन्ये स्वगृहे च तौ ॥२४॥

सखीभिः स्नपयामास भोजयामास चादरात् । भट्टमात्राग्निवेतालौ सा कन्या सुरसुन्दरी ॥२५॥
गृहापवरकस्यान्तः शय्याया कन्यका निशि । उपविष्टा कृतोपान्तदीपिका पत्रभक्षिका ॥२६॥
तस्या उभयतः पार्श्वे बद्धावेडकघोटकौ । अग्रे भद्रासनं मुक्तं रूप्यस्वर्णमणिमयम् ॥२७॥
उपविष्टस्तदा द्वारे भट्टः प्राहाग्निकं प्रति । सर्वं समीहितं सिद्धं विक्रमार्कमिहानय ॥२८॥
ततोऽगादग्निवेताल आनेतुं विक्रमं द्रुतम् । भट्टो दध्यावहं जात एकाकी करवै किमु ॥२९॥
एडकः प्राह भो भट्ट ! किमर्थमागतो वद । अस्मिन् स्थाने विना शक्तिं कोऽप्युपैति नरो न हि ॥३०॥
शङ्कितो भट्टमात्रो न यावद् वक्ति च तं प्रति । एडकेनाहिणा बाढमाहतस्तावता तथा ॥३१॥
क्षणेनोज्जयिनीपुर्या गोपुरे पतितो यथा । दध्यावादौ मया मौढ्याद्वेतालः प्रेषितः पुरि ॥३२॥
क्षणेन सुस्थितो भूत्वा यावत्पश्यति सर्वतः । तावदुज्जयिनीं जज्ञौ गोपुरद्वारवीक्षणात् ॥३३॥
चमत्कृतस्ततो गत्वा विक्रमार्कस्य सन्निधौ । एडकादिकृतोदन्तं भट्टमात्रो जगौ तदा ॥३४॥
विमृश्य भूपतिर्भट्टमात्रं रक्षाकृते पुरः । मुक्त्वा दहनवेतालयुक्तस्तां नगरीं ययौ ॥३५॥
विलोक्य नगरीं भूयोऽदृश्यरूपोऽग्निकान्वितः । चक्रेश्वर्यालये गत्वा नत्वा देवीं स्थितः क्षणम् ॥३६॥
आकाशे श्यामलां छायां वीक्ष्य प्रोवाच विक्रमः । वर्षाकालोऽधुना यातो चल्यते तेन शीघ्रतः ॥३७॥
वेतालोऽवग् ततः सैव कन्यकेति च पद्मिनी । तत्सच्छरीरसौरभ्याकर्षिता भ्रमरावली ॥३८॥

॥ २८३ ॥

श्यामलं कुर्वती व्योममण्डलं सर्वतोऽभितः । समागताऽस्ति कस्तूरीकज्जलोज्ज्वलविग्रहा ॥३९॥
श्रुत्वैतद्विक्रमादित्यः तां कन्यां प्राप्तुकामकः । उत्सुकोऽभून्मयूरौघ इव वर्षाम्बुदावलीम् ॥४०॥
क्षणेनैकेन सा कन्या रूपश्रीजितनिर्जरी । सुखासनसमासीना तत्रायाता सखीयुता ॥४१॥
विमानादुत्तरन्ती सा वीक्ष्य विक्रमभूपतिम् । शून्यचित्ता तदा पद्भ्यां स्खलिता सुरसुन्दरी ॥ यतः—"अक्खाण०"॥
दध्यौ चेति स्वचित्ते सा किमेष वासवः सुरः । नागेशः किन्नरः किं वा किंवा विद्याधरो ह्ययम् ॥४३॥
भक्तिपूर्वं सुरीं नत्वा प्राहेति सुरसुन्दरी । एष चेन्मानवो भर्ता भविष्यति ममानघः ॥४४॥
तदा सपादलक्षस्य वसोर्वर्द्धापनं मया । कर्तव्यमिति जल्पित्वा गृहेऽगात्सुरसुन्दरी ॥४५॥
विक्रमार्कनृपस्तस्या रूपं देवाङ्गनाधिकम् । निरीक्ष्य तां तदा प्राप्तुं कामोऽजनि भृशं हृदि ॥४६॥
मध्येदेवकुलं गत्वा विक्रमार्कनृपो द्रुतम् । भक्तिपूर्वं सुरीं नत्वा जगादेति कृताञ्जलिः ॥४७॥
एषा चेत्कन्यका मे हि भविष्यति प्रिया प्रिया । पूजा सपादलक्षस्य कर्तव्या मयका तदा ॥४८॥
भक्तिपूर्वं सुरीं नत्वा गत्वौकः सुरसुन्दरी । मोहिता स्वसखीं प्रेष्यानिनाय भूपतिं गृहम् ॥४९॥
सखीभिः स्नपयामास भोजयामास चादरात् । विक्रमार्कं नृपं कन्या सदन्नपानदानतः ॥५०॥ यतः—
"पानीयस्य रसः शैत्यं परान्नस्यादरो रसः । आनुकूल्यं रसः स्त्रीणां मित्राणां वचनं रसः" ॥५१॥
आदरेण च यद्दत्तं भोजनं तत्सुधायते । अनादरेण यद्दत्तं भोजनं तद्विषायते ॥५२॥

कन्या दध्यावयं कीदृक् सत्त्वौदार्यगुणान्वितः । विद्यते च पुमानेष परीक्षामिति सा व्यधात् ॥५३॥
गृहोपवरकस्यान्तः शय्यायाः कन्यका निशि । उपविष्टा कृतोपान्तदीपिका पत्रभक्षिका ॥५४॥
तस्या उभयत. पार्श्वे बद्धावेडकघोटकौ । अग्रे भद्रासनं रत्नमयं स्थापितं तदा ॥५५॥
उपविष्टो नृपो द्वारे साहसी विक्रमार्यमा । एडकः प्राह भो कस्त्वमागाः कस्य बलादिह ॥५६॥
राजाऽवक् स्वबलेनेति श्रुत्वा प्राहैडकस्तदा । एवं चेत्स्वामिनीं मेऽत्र पल्यंके संस्थितामिमाम् ॥५७॥
जल्पयिष्यति यो वारांश्चतुरस्तं वरिष्यति । ×ततो राजा जगौ दीपमधिष्ठायाग्निकाधुना ॥५८॥
कथां मे जल्पतो देहि त्वकं प्रत्युत्तर स्फुटम् । अग्निकोऽवक् तव स्वामिन् ! प्रमाण वचनं मम ॥५९॥
अवतीर्णेऽग्निके दीपे प्रददत्युत्तरं तदा । शृण्वत्यां राजनन्दिन्यां विक्रमार्को जगाविति ॥६०॥
कौशाम्ब्यां वामनो विप्रः सावित्री तस्य गेहिनी । पुत्रो नारायणः पुत्री गावित्री मातुलोऽच्युतः ॥६१॥
वरयोग्यां सुतां वीक्ष्य चत्वारो जनकादयः । आशासु चतसृष्वासु गत्वा दृष्ट्वा वरान् वरान् ॥६२॥

---

× "राजा प्राहैडक ! ब्रूहि कथा मेऽस्त्यधुना निशि(शा) । अजल्पत्येडके राजा प्राह वेतालकं प्रति ॥
दीपेऽवतीर्य वदतो कथा देहि त्वमुत्तरम् । अवतार्य ततो दीपेऽग्निक विक्रमभानुमान् ॥
जगौ प्रदीप ! किं दत्से उत्तरं मम सम्प्रति । दीप प्राह कथा नैव वक्तुं जानामि भूपते ! ।
उत्तरं तु प्रदास्यामि । भवतोऽहं प्रयत्नत " ॥ ×इति ग-पुस्तकेऽधिक पाठः ॥

॥ २८५ ॥

विवाहं मेलयित्वा च मुहूर्ते शोभने तथा । लग्नं लात्वाऽऽनयामासुः वरान् स्वस्वजनान्वितान् ॥६३॥ [युग्मम्]
आगता युगपत्तत्र गावित्रीं वरितुं कनीम् । वदन्त्येवं वराः सर्वे क्रोधाध्माताः पृथक् पृथग् ॥६४॥
अहमेनां ग्रहिष्यामीत्येवं वादं द्विजन्मसु । कुर्वत्सु तेषु सर्पेण दष्टा कन्या मृता क्षणात् ॥६५॥
एको वरस्तया सार्धं चितायां मृत्युमीयिवान् । द्वितीयोऽस्थीनि लात्वाऽगात् तीर्थे क्षेप्तुं तदा द्रुतम् ॥६६॥
कृत्वोटजं तृतीयस्तु श्मशानस्योपरि स्फुटम् । भिक्षान्नतत्परः पिण्डं दत्त्वा तस्मै च खादति ॥६७॥
चतुर्थो भूतले भ्राम्यन् वसन्तपत्तने गतः । मुकुन्दद्विजगेहिन्या भोजनार्थं निमन्त्रितः ॥६८॥
भोजनायोपविष्टाय द्विजाय द्विजयोषिता । तस्याः सूनू रुदन् दत्ते न कर्तुं परिवेपणम् ॥६९॥
मात्राऽग्नौ तनयं क्षिप्त्वा विहितं परिवेपणम् । द्विजो दध्यौ पुरा कन्याहत्या लग्ना मम स्फुटम् ॥७०॥
अधुना वालकस्यास्य हत्या लग्ना पुनर्मम । तेन मे नरकं मुत्त्वाऽन्यत्र स्थानं न विद्यते ॥७१॥
धिग् धिग् मे जीवितं भूरि मेदिनीभ्रमणं तथा । धिग् भोजनमिदं कुक्षिपूर्तये बालहत्यया ॥७२॥
स्वार्थी जीवो न किं पापं कुरुते दुर्गतिप्रदम् । मातृ-पितृ-सुता-पुत्र-मित्रादिकवधादिह ॥७३॥
किं किं न कयं को को न पत्थिओ "०॥७४॥
विलक्षास्यं द्विजं वीक्ष्य ब्राह्मणी प्राह भो द्विज !। भोजनं कुरु मा खेदं गच्छ जीवन् सुतोऽस्ति मे ॥७५॥
भोजनानन्तरं किञ्चिच्चूर्णं लात्वा गृहान्तरात् । प्रक्षिप्याग्नौ सुतो जीवन् कृतो मात्रा तदा क्षणात् ॥७६॥ यतः—

"मन्त्र-तन्त्र-मणि-चूर्ण-महौषध्यादिवस्तुनः । अचिन्त्यो विद्यते लोके प्रभावोऽभीष्टदायकः ॥७७॥
तस्याः पार्श्वाच्च याचित्वा चूर्णं तद्वाडवस्तदा । आगत्य स्थण्डिले कन्या जीवयामास चूर्णतः ॥७८॥
कन्यासहमृतो विप्रो जीवितः सोऽपि तत्क्षणात् । तीर्थगतोऽपि तत्रागात्तदानीं वाडवो द्रुतम् ॥७९॥
कन्यका जीविता दृष्ट्वा दिव्यरूपा तदा क्षणात् । अजनिष्ट कलिस्तेषा वराणा पूर्ववद् भृशम् ॥८०॥
भो दीप ! कथय त्व सा कन्या कस्य भविष्यति । दीपः प्राह न जानेऽहं कस्य कन्या भविष्यति ॥८१॥
विक्रमार्को जगौ योऽत्र जानन्नपि वदिष्यति । तस्य हत्या भवेत्सप्तग्रामज्वालनिका द्रुतम् ॥८२॥
हत्याभयाच्चया नार्या सुप्तया कथित द्रुतम् । तीर्थेऽस्थिक्षेपकः सूनुर्जीवनाज्जनकः स च ॥८३॥
सार्द्धोत्पन्नः स्मृतो भ्राता पिण्डदस्तु पतिः स्मृतः । एव कन्यैकवारं सा विक्रमार्केण जल्पिता ॥८४॥
अवतार्य ततस्तार्क्षेऽग्निक विक्रमभानुमान् । जगौ घोटक ! किं दत्से उत्तर मम सम्मति ॥८५॥
तार्क्षः प्राह कथा नैव वक्तुं जानामि भूपते ! । उत्तर तु प्रदास्यामि भवतोऽहं प्रयत्नतः ॥८६॥
ततोऽवतीर्णे वेताले तार्क्षे ददति तुत्तरम् । शृण्वत्या भूपनन्दिन्या विक्रमार्को जगाविति ॥८७॥
शेषात् पुरात् पुरा तक्ष-दौसिक-स्वर्णकृद्-द्विजाः । मित्रा देशान्तरे यान्तो महाटव्या ययुर्निशि ॥८८॥
वने जागरतो भीतिः पुंसो नो जायते मनाग् । ध्यात्वेति तेऽखिलाः स्वस्य वारे जाग्रति यामतः ॥८९॥ यतः-
"उद्यमे नास्ति दारिद्र्य पठने नास्ति मूर्खता । मौनेन कलहो नास्ति नास्ति जागरतो भयम्" ॥९०॥

॥ २८७ ॥

प्रथमप्रहरे सूत्रकृता जागरता सता। काष्ठैः षोडशवर्षीया घटिता कन्यकाऽद्भुता ॥९१॥
द्वितीयप्रहरे दोसिकेन जागरता निशि। वस्त्रैः शृङ्गारिता सद्यः चारुभिः पुत्रिका च सा ॥९२॥
३ तृतीयप्रहरे स्वर्णकृता जागरता निशि। घटित्वाऽऽभरणैर्वर्यैर्भूषिता पुत्रिका तदा ॥९३॥
चतुर्थप्रहरे मन्त्रैरुन्निद्रेण द्विजन्मना। सजीवा विहिता सद्यः पुत्रिका चारुरूपभृत् ॥९४॥
प्रातः सर्वेऽपि तां चारुरूपां सूत्रकृतादयः। वीक्ष्य कन्याकृते वादं मिथश्चक्रुस्तदाऽरिवत् ॥९५॥
६ भो वक्षि घोटक! त्वं सा कन्या कस्य भविष्यति। घोटकोऽवग् न जानेऽहं कस्य कन्या भविष्यति ॥९६॥
विक्रमार्को जगौ योऽत्र जानन्नैव वदिष्यति। तस्य हत्या भवेत्सप्तग्रामज्वालनिका द्रुतम् ॥९७॥
हत्याभयात्तया शय्यास्थितया कथितं द्रुतम्। स पिता घटिता येनानीय काष्ठानि पुत्रिका ॥९८॥
९ वसनैर्भूषिता येन जायते मातुलः स च। सजीवा विहिता येन स गुरुर्भवति द्रुतम् ॥९९॥
भूषिता भूषणैर्येन भर्ताऽसौ भविष्यति। एवं द्वितीयवारं सा जल्पिता विक्रमांशुना ॥१००॥
अवतार्याग्निकं भद्रासने विक्रमभानुमान्। जगौ विष्टर! किं दत्से उत्तरं मम सम्प्रति ॥१०१॥
१२ भद्रासनं जगौ वक्तुं नैव जानामि किंचन। उत्तरं तु प्रदास्यामि भवतोऽहं प्रयत्नतः ॥१०२॥
ततोऽवतीर्य वेताले विष्टरे हुं च कुर्वति। शृण्वत्यां राजनन्दिन्यां विक्रमार्को जगाविदः ॥१०३॥
विक्रमाढ्यपुरे सोम–भीमाह्वौ द्वौ सुहृद्वरौ। वसतः सोऽन्यदा सोमः परिणीतोऽध्वरापुरे ॥१०४॥

आनेतुं बहुशः सोमः प्रियां श्वसुरसद्मनि । प्रययौ सा प्रिया नैव समायाति स्म मुग्धधीः ॥१०५॥
दूनेन तेन सोमेन मित्राय कथितं तदा । प्रिया मे नैति मद्गेहे ब्रूहि किं क्रियतेऽधुना ॥१०६॥ यतः–
"ददाति प्रतिगृह्णाति गुह्यमाख्याति जल्पति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्" ॥१०७॥
आकारणाय मित्रस्य पत्न्या भीमोऽन्यदा स्वयम् । सोमयुक्तश्चलन्मार्गे ययौ भट्टारकालये ॥१०८॥
भीमो मुक्त्वा रथे मित्रं देवीमणातिदम्भतः । गत्वा सुरीनिकाय्यान्तर्देव्यग्रे प्रोक्तवानिति ॥१०९॥
यदि मद्वचनान्मित्रप्रियैष्यति सुहृद्गृहे । तदा पूजाकृते तुभ्यमहं दास्ये निज शिरः ॥११०॥
यदा तौ च गतौ तत्र हृष्टा मित्रप्रिया तदा । भीमस्य वचनान्मित्रपत्न्या मानितमानकम् ॥१११॥
कृत्वाऽऽनकं ततस्तस्याः सोम–भीमौ तदा द्रुतम् । चलन्तौ हृष्टचेतस्कौ स्वकीयनगरं प्रति ॥११२॥
रज्जुं मित्रशये दत्त्वा भीमो देवीनतिच्छलात् । गत्वा देव्याः पुरः शीर्षं छित्त्वा पूजामचीकरत् ॥११३॥
रज्जुं सोमोऽपि भार्याया दत्त्वा देवीगृहे ययौ । मित्र वीक्ष्य शिरश्छेदाद्देव्याः पूजामचीकरत् ॥११४॥
क्षणाद्गत्वा वधूस्तत्र दृष्ट्वाऽग्रे पतिदेवरौ । पतितौ छिन्नशीर्षौ च दध्यावेव हहा हृदि ॥११५॥
श्वसुरस्य गृहे यामि यद्यहं मृतभर्तृका । तदा लोका वदिष्यन्ति हत्वाऽऽगात्पतिदेवरौ ॥११६॥
गताया पितृसदने गदिष्यन्ति जना इति । तस्मान्मृत्युर्वरं देव्याः पुरतो भर्तृवन्मम ॥११७॥
ध्यात्वेति क्षुरिका यावद्दत्ते कण्ठे निजे च सा । तावद्देवी जगौ माऽत्र साहसं कुरु भामिनि! ॥११८॥

॥ २८९ ॥

साऽवक् तर्हि इमौ देवि ! जीवय त्वं स्वसेवकौ । देवी प्राह गले शीर्षौ योजयाशु मिलिष्यतः ॥११९॥
तयोत्सुकतया शीर्षौ परावर्तेन यौजितौ । भो विष्टर ! वद त्वं सा कस्य कन्या भविष्यति ॥१२०॥
विष्टरः प्राह जानेऽहं न सा कस्य भविष्यति । विक्रमार्को जगौ योऽत्र जानन्नैव गदिष्यति ॥१२१॥
तस्य हत्या भवेत्सप्तग्रामज्वालनिका द्रुतम् । हत्याभयात्तया शय्यास्थितया कथितं द्रुतम् ॥१२२॥
यस्मिन्गले शिरो भर्तुर्योजितं प्रियया तया । घटः स एव कान्तोऽभूत्तस्याः शीर्षप्रधानतः ॥१२३॥
बुद्धिप्रपञ्चतः श्रीमद्विक्रमार्कमहीभुजा । जल्पापिता तदा सद्यस्तृतीयं वारमेव सा ॥१२४॥
अवतार्याग्निकं शय्यासने विक्रमभानुमान् । जगौ शय्येऽधुना दत्से ममेह किं त्वमुत्तरम् ॥१२५॥
शय्यासनं जगौ वक्तुं नैव जानामि किञ्चन । उत्तरं तु प्रदास्यामि भवतोऽहं प्रयत्नतः ॥१२६॥
वेतालाधिष्ठिता शय्या हुंकारं ददते ततः । शृण्वत्यां राजनन्दिन्यां विक्रमार्को जगावदः ॥१२७॥
बेन्नातटनगरे विश्वरूपाभिधमहीपतेः । शूरो भृत्यः प्रिया तस्य कमला शीलशालिनी ॥१२८॥
वीरनारायणो नाम्ना पुत्रः शौर्यगुणान्वितः । तस्याभूद्गेहिनी पद्मावती विनयशालिनी ॥१२९॥
विशिष्टं सुभटं वीरनारायणमिलापतिः । ज्ञात्वा तस्मै ददौ द्रव्यलक्षोत्पत्तिपुरं तदा ॥१३०॥
वीरनारायणो देहरक्षां कुर्वन् महीशितुः । रात्रौ तस्थौ गृहद्वारे जाग्रत् खड्गसहायकः ॥१३१॥ यतः—
"इङ्गिताकारतत्त्वज्ञः प्रियवाक् प्रियदर्शनः । सकृदुक्तग्राही दक्षः प्रतीहारः प्रशस्यते" ॥१३२॥

राज्ञा स्त्रीरुदनं श्रुत्वा रात्रौ करुणनिस्वनम् । वीरनारायणो ज्ञातुं प्रेषितो नगराद्बहिः ॥१३३॥
फालया वप्रमुल्लङ्घ्य वीरः खड्गसखा द्रुतम् । रुदत्या योषितः पार्श्वे श्मशाने निर्भयो ययौ ॥१३४॥
राजाऽपि वप्रमुल्लङ्घ्य कौतुकी हेलया तदा । श्मशानमेत्य भृत्यस्य वचः शृण्वन् रहः स्थितः ॥१३५॥
वीरः प्राहाग्रले माता ! रुद्यते केन हेतुना । तयोक्तमस्य राज्यस्याधिष्ठात्री देवताऽस्म्यहम् ॥१३६॥
अस्मिन् कुण्डे ज्वलद्वह्निमये आनीय भूपतिम् । प्रक्षेप्स्यन्ति चतुःषष्टियोगिन्योऽद्य स्वतुष्टये ॥१३७॥
तस्मिन् भूपे हुते तावी राज्यं शून्यं भविष्यति । ततोऽहं च निराधारा दुःखिता भविताऽस्मि हा ॥१३८॥
अस्य भूमीपतेः कोऽपि साहसी सेवको न हि । यो रक्षां निजदेहस्य दानेन कुरुते द्रुतम् ॥१३९॥
वीरः प्राहाहमेवास्य भूपस्य सेवकाग्रणीः । भूपरक्षाविधिं वक्षि देवि ! कुर्वे त्वयोदितम् ॥१४०॥
देवी प्राह च तत्कार्यं केन कर्तुं न शक्यते । वीरो जगौ वदाशक्यशक्याभ्यां किं प्रयोजनम् ॥१४१॥ यतः–
"प्रारभ्यते न खलु विघ्नभयेन नीचैः, प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः, प्रारब्धमुत्तमगुणा न परित्यजन्ति" ॥१४२॥
देवी प्रोवाच भो वीर ! द्वात्रिंशल्लक्षणौ नरौ । विना कार्यं न शु(सि)द्ध्येत योगिनीनां मनागपि ॥१४३॥
द्वात्रिंशल्लक्षणौ राजा त्वं च स्थः पुरुषोत्तमौ । वीरः प्राह नृपो विश्वविश्वाधारोऽस्ति भूतले ॥१४४॥ यतः–
"येन पुंसा कुलं सौख्यभाग् जायेत धराऽथवा । रक्षितव्यो नरः सोऽपि शरीरेण श्रियाऽपि वा ॥१४५॥

॥ २९१ ॥

भग्ने च तुम्बके चक्रे न तिष्ठन्त्यरका यथा । तथा कुलाधिपे वर्ये नरेऽन्ये मनुजाः स्मृताः ॥१४६॥ उक्तं चागमे-
"जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खेह । न हु तुंबंमि विणट्ठे अरया साहारया हुंति" ॥१४७॥
अहं भृत्योऽस्मि तस्यैव मया मृतेन किं भवेत् । तेन तिष्ठ क्षणं देवि ! क्षिपाम्यग्नौ निजां तनुम् ॥१४८॥
इत्युदीर्य द्रुतं गत्वा मातापित्रोश्च सन्निधौ । देव्युक्तमखिलं प्रोक्त्या चलितः सुभटस्तदा ॥१४९॥
पुत्रं विनेह जीवन्तावप्यावां च मृतौ ननु । ध्यात्वेति तावियायुक्तौ पुत्रपृष्ठौ दधावतुः ॥१५०॥
तत्रैत्य देवता पृष्टा वीरेण किं करोम्यहम् । देव्योक्तं सवनं कृत्वा वह्निकुण्डे तनुं क्षिप ॥१५१॥
इति तस्या वचः प्राप्य चिक्षेपाग्नौ तनुं भटः । अम्बाजनकगेहिन्यस्तत्पृष्ठौ च तथा व्यधुः ॥१५२॥
एतत्सर्वं नृपो दृष्ट्वा दध्यौ मे जीवितेन किम् । झम्पां दातुं बृहद्भानुकुण्डकण्ठे समागमत् ॥१५३॥
ददानो भूपतिर्झम्पां देव्या दोर्भ्यां धृतस्तदा । उक्तं च साहसं माऽत्र कुरु झम्पाप्रदानतः ॥१५४॥
राजा पप्रच्छ काऽसि त्वमन्तरायीभवात्र मा । सा प्रोवाचास्य राज्यस्याधिष्ठायिका देवताऽस्म्यहम् ॥१५५॥
राजाऽवग् देवि ! यद्येतान् सुभटान् जीवयिष्यसि । तदाऽहं जीवयिष्यामि नान्यथा विद्धि कर्हिचित् ॥१५६॥
देव्या क्षिप्त्वा छटां सर्वे सजीवा विहिताः क्षणात् । राजाऽप्राक्षीत्त्वया देवि ! शक्रजालं कृतं वहु ॥१५७॥
देवी प्रोवाच सर्वेषां त्वदादीनां नृणामिह । परीक्षायाः कृते सर्वं विहितं भूपते ! मया ॥१५८॥
ततश्चमत्कृतो देवीं नत्वा राजाऽऽगमत् गृहम् । ग्रामपुर्यादिदानेन मानयामास सेवकम् ॥१५९॥

विक्रमार्को जगौ शय्ये ! तेषु राजादिषु ध्रुवम् । साहसी विद्यते को हि विश्वोत्तरगुणाग्रणीः ॥१६०॥
शय्या माह न जानेऽहं साहसी विद्यतेऽत्र कः । विक्रमार्को जगौ यो न जानन्नेव गदिष्यति ॥१६१॥
तस्य हत्या भवेत्सप्तग्रामज्वालनिरा द्रुतम् । हत्याभयाच्चया तत्र सुप्तयेति प्रजल्पितम् ॥१६२॥
सेवकेभ्यो नृपः सत्त्वाधिकोऽत्र विद्यते ननु । यतो राजा धराऽऽधारः सेवकाश्च तथा न हि ॥ १६३॥
एवं कन्या चतुर्वारं जल्पयित्वा नृपो निशि । परिणिन्ये प्रगे चारुमहोत्सवपुरस्सरम् ॥१६४॥
ततस्तिलङ्गभूपालः प्राहेत्युत्थीयता वर ! । कुरुष्व भोजनं भूपो जगौ च विक्रमार्यमा ॥१६५॥
चक्रेश्वर्या मयाऽमानि सपादलक्षवैभवः । तद्दानं न विना भोक्ष्ये कन्यकैवं जगौ तदा ॥१६६॥
भेरीमुखवादित्रस्वानपूरितदिग्मुखः । विक्रमार्कः प्रियायुक्तश्चक्रेश्वर्यालय ययौ ॥१६७॥
सपादलक्षद्रविणं विक्रमार्कः प्रियाऽपि च । पृथक् पृथग् ढुढौके च कल्याणीभक्तिपूर्वकम् ॥१६८॥
स्तुत्वा नत्वा गुरून् भक्त्या नानोत्सवपुरस्सरम् । पश्चादेत्य निजे स्थाने बुभुजे सप्रियः स च ॥१६९॥
कन्यामादाय भूपालो विक्रमार्कः पुरीं निजाम् । आययावग्निवेतालसहितः समहोत्सवम् ॥१७०॥
कारयित्वा महावासं तस्या वासकृते नृपः । सुखेन नयते कालं न्यायमार्गस्थितोऽनिशम् ॥१७१॥
एवं श्रीविक्रमार्कस्य वृत्तं चामरधारिणी । प्रोक्त्वाऽऽख्याऽन्यरू कथं तस्य तुल्योऽसि विक्रमाङ्गज ! ॥१७२॥
श्रीविक्रमचरित्रस्य पुरश्चामरधारिणी । वृत्त श्रीविक्रमार्कस्य तस्थौ चाद्या सुभाषया ॥१७३॥

॥ २९३ ॥

इति प्रथमचामरहारिणीमोक्तकथाचतुष्टयम् ॥

श्रीविक्रमचरित्रस्य पुरश्चामरहारिणी । द्वितीयाऽमृतसध्रीच्या वाचा वक्तीति संसदि ॥१७४॥
अन्यदा विक्रमादित्यसभायां कोऽपि पण्डितः । वक्तुं प्रवर्तितोऽपूर्वां कथां भूपमजल्पतः ॥१७५॥ तथाहि—
चम्पकाह्वपुरे राजाऽभवच्चम्पकनामतः । चम्पका गृहिणी शीलशालिनी वनितोत्तमा ॥१७६॥
देवशर्माह्वविप्रस्य प्रिया प्रीतिमती प्रिया । असूत तनयां चारुरूपां पूर्वेव रोहिणीम् ॥१७७॥
रुक्मिणीति कृता तस्या आह्वा पित्रादिभिस्तदा । ददते च मुदं पित्रोर्लल्लादिशब्दजल्पनैः ॥१७८॥
वर्धमाना क्रमाद्यावदभूदष्टाब्दिका सुता । तावद्दैवान्मृतिं प्रीतिमती माता तदा क्षणात् ॥१७९॥
देवशर्मा द्विजस्तस्या मृत्युकृत्यमशेषतः । चकार विधिवत्तत्राकार्य निखिलसज्जनान् ॥१८०॥
भक्तिमन्नादिदानेनावसरे तन्वती पितुः । अतीव वल्लभा जाता विनयादिगुणैः सदा ॥१८१॥
विधवैका द्विजा पार्श्वगृहस्था कमलाऽभिधा । वक्तीति देवशर्माणं पतिं कर्तुमनाः स्थिता ॥१८२॥
भो विप्र ! ब्राह्मणी मृत्युमेता त्वं तु सुस्वादभुग् । लघ्वीयं तनया व्यक्ता राद्धुं जानाति नो मनाग् ॥१८३॥
तेन पाणिग्रहं कस्याश्चित्स्त्रियाः कुरु साम्प्रतम् । भविष्यति ततस्ते शं नव्यपत्नीसमीपतः ॥१८४॥
लघुत्वादधुना तुभ्यं दत्ते कश्चिद् द्विजः सुताम् । वृद्धत्वे तव को दाता तनयामात्मनो मनाग् ॥१८५॥
यदा वराय कस्मैचित्पुत्री विश्राणिता त्वया । भविष्यति तदा ते का गतिरत्र वद द्विज ! ॥१८६॥

मदीय वचन ह्येतदग्रे सुखकर तव । भविष्यति द्विजातीव जानीहीति स्वय स्फुटम् ॥१८७॥
हित मित च सुखद वचो ग्राह्यं स्त्रियामपि । त्याज्यं दुःखप्रदं वाक्यं बान्धवानामपि द्रुतम् ॥१८८॥
विप्रः प्रोवाच गेहिन्या अन्यस्याः सग्रहात् सृतम् । पूर्वप्रियासमा पत्नी न भविष्यति कर्हिचित् ॥१८९॥
अतीवेय सुता भक्तिं कुरुतेऽन्नादिदानतः । तथा मम यथा पूर्वप्रियाऽपि विस्मृताऽभवत् ॥१९०॥
ततः सा कमला दध्यावह कुर्वे तथा यथा । पुत्र्या उपरि विप्रस्यानुराग उत्तरिष्यति ॥१९१॥
अन्नमध्ये रहोऽभ्येत्य लवणं भूरि नित्यशः । प्रक्षिप्य कमला याति छलादात्मनिकेतने ॥१९२॥
कदाचित्कचरं क्षार क्षिप्त्वा याति रहः पुनः । विप्रः प्रोवाच भो पुत्रि ! क्षारमन्न कथ कुरु ॥१९३॥
पुत्री प्राह पितः ! क्षारमन्न कुर्वे मनाग् न हि । एवंविध सदैवान्न दुःखी भुञ्जन् द्विजोऽभवत् ॥१९४
उत्ततार द्विजस्यानुरागः पुत्र्या तदा स्फुटम् । ब्राह्मण्यग्रे जगौ विप्रो दत्तेऽन्नं क्षारमञ्जसा ॥१९५॥
कमलाऽवग् मया पूर्व भवतः कथित पुरा । द्विजोऽवग् गृहिणीमन्या त्वं विलोकय मत्कृते ॥१९६॥
विलोकिता तया कन्या चटिता नैव कुत्रचित् । ततोऽतिदूनचित्तोऽभूद्विप्रो गृहिण्यलङ्घितः ॥१९७॥
ब्राह्मणी प्राह भो विप्र ! रोचते तव चेद्यदि । तदाऽहं च भविष्यामि भवतो गृहिणी द्रुतम् ॥१९८॥
द्विजोऽवक् त्व प्रिया चेन्मे भविष्यसि तदा वरम् । इष्टं वैद्योपदिष्टं च वाञ्छयते किं न रोगिणो ॥१९९॥
ततस्तस्याः कृतस्तेन द्विजेन सङ्ग्रहस्तदा । स्नानान्नपानदानेन विप्रोऽपि रञ्जितस्तया ॥२००॥ यतः–

॥ २९५ ॥

"हत्थी दम्मइ संवच्छरेण मासेण दम्मए तुरओ । महिलाए किर पुरिसो दम्मइ एगेण दिवसेण" ॥२०१॥
कमलाऽवक् पतेऽन्येषामपत्यादि बहिः सदा । याति चारयितुं धेनूर्नात्मीया तनया पुनः ॥२०२॥
ततः कान्तावचःसक्तो देवशर्मा द्विजस्तदा । बहिश्चारयितुं धेनूः प्रेषयामास नन्दिनीम् ॥२०३॥
ददते भोजनं यत्तद् रुक्मिण्या द्विजगेहिनी । कठोरवचसाऽत्यन्तं दत्ते दुःखं च भूरिशः ॥२०४॥
सहमाना वचस्तस्यास्तादृग् दुःखप्रदं तदा । चारयन्ती भृशं धेनूर्दुःखिन्यजनि रुक्मिणी ॥२०५॥
"बालस्स मायमरणं भज्जामरणं च जुव्वणारमए । थेरस्स पुत्तमरणं तिन्निवि गरूआइं दुक्खाइं" ॥२०६॥
चारयन्ती सदा धेनू रुक्मिणी खिन्नमानसा । लाति विश्राममेकस्य करीरस्य तरोरधः ॥२०७॥
इतः स्वर्गे हरेः सूनोर्मेघनादस्य गेहिनी । मेघवती व्यधात्तत्राभ्युत्थानं नारदस्य न ॥२०८॥
रुष्टश्च नारदो दध्याविथं गर्व वहत्यलम् । उत्तार्यतेऽभिमानोऽस्याः कथं बुद्ध्या मयाऽधुना ॥यतः—"जातिकुलरूव-०"
ये भवन्ति शठाचारा मानवा अभिमानिनः । ते पात्यन्ते महानर्थे स्वकृतैः कर्मभिर्ननु ॥२१०॥
ध्यायन्निति महीपीठमेत्य दृष्ट्वा च रुक्मिणीम् । करीरस्थां ययौ स्वर्गे कथितं हरिसूनवे ॥२११॥
नारदः प्राह भो मेघनाद ! भूमीतले मया । दृष्टैका कन्यकाऽतीव सुरूपा द्विजनन्दिनी ॥२१२॥
तस्यास्तुल्याऽस्ति नो देवाङ्गनापि त्रिदशालये । रोचते यदि चेत्ते सा तदा तत्रैव गम्यते ॥२१३॥
मेघनादो जगौ तत्र गम्यते कन्यकाकृते । विचार्येति ययौ मर्त्यलोके च नारदान्वितः ॥२१४॥


॥ २९६ ॥

गान्धर्वेण विवाहेन परिणीता च रुक्मिणी । आनीय च पृथक् स्थानेऽमुञ्चत् स्वर्गे हरेः सुतः ॥२१५॥
नारदो मेघनादेन मानितः प्रीणितः पुनः । मर्त्यलोके ययौ सद्यस्तपस्तप्तु नभोऽध्वना ॥२१६॥
मेघनादोऽनिश सौख्य चानुभवस्तया समम् । प्रियां मेघरतीं चित्ते न सस्मार मनागपि ॥२१७॥
सखीं प्रति जगौ मेघवतीति रमणोऽधुना । नायात्यत्र कदा कुत्र तिष्ठति ज्ञायते न हि ॥२१८॥
विलोक्यता पतिः कुत्र तिष्ठतीत्युदिते तया । सखी शक्रसुतं नारीयुतं वीक्ष्यागता जगौ ॥२१९॥
स्वामिनि ! त्वत्पतिः सारिपाशक्रीडापरः सुखम् । विमानेऽन्यत्र निर्जर्या सार्धं तिष्ठति सन्ततम् ॥२२०॥
मेघवत्या ततः कान्तः स्वयमाकारितो भृशम् । नायाति स्वगृहे यावत्तावच्चयेति चिन्तितम् ॥२२१॥
अय नून पतिर्मे हि नारदेन क्रुधा पुरा । आहितो वनितामन्या ज्ञायते इति क्षुब्धित ॥२२२॥ यतः–
"कलिकारओ वि जणमारओ नि सावज्जजोगनिरओ वि । ज नारओ वि सिज्झइ तं खलु सीलस्य माहप्पं"॥२२३॥
मया पूर्वं समायातो नारदो ह्यपमानितः । तेनेदं विहितं सर्वं मम दुःखकृते ननु ॥२२४॥
नारदो मान्यते चेद्धि तदा सोऽपि ऋपिस्तदा । करोति स्म यथा कान्तं वशगं चापि सन्ततम् ॥२२५॥
आगतो नारदोऽन्येद्युः सादरं स्वागतादिना । प्रपृच्छय रञ्जितो मेघवत्या मादेति तां प्रति ॥२२६॥
मानितो न त्वया पूर्वं मनाग् लोचनवीक्षणात् । विधीयतेऽधुना कस्मादादरश्च मयि त्वया ॥२२७॥
मेघवती जगौ किञ्चित्कार्यसंसक्तया मया । उपास्तिर्न कृता यत्ते क्षम्यता तत्प्रसद्य मे ॥२२८॥

॥ २९७ ॥

नारदः प्राह सर्वत्र पूज्यपूजाव्यतिक्रमः । कृतो भवति दुःखाय परत्रामुत्र देहिनाम् ॥२२९॥ यतः–
"देवानां प्रतिमाभङ्गे गुरूणामवहीलने । लभन्ते दुर्गतौ दुःखसन्ततिं देहिनो भृशम् ॥२३०॥
३ सीहा हु सीसेण गिरिं पि भिंदे सीहा हु सीहो कुविओ न भक्खे"० ॥
जगौ मेघवती चक्रे मयाऽवज्ञा तव प्रभो । मयि प्रसादमाधाय तत्त्वं क्षमस्व साम्प्रतम् ॥२३१॥
नारदः प्राह ते कार्यं विद्यते चेद् यथा मनाग् । कथनीयं तदा मह्यं तत्करोमि यथा द्रुतम् ॥२३२॥
६ प्राह मेघवती कान्तं सपत्नीं त्याजय द्रुतम् । ओमित्युक्त्वा गतो मेघनादपार्श्वे जगावृषिः ॥२३३॥
मानुष्यो मरुतां भोगो युज्यते न मनागपि । रसा–सृग्–मांस–मेदो–स्थि–मज्जादिमयदेहतः ॥२३४॥
इत्यादि बहुशो युक्त्या मानुष्यां विमुखीकृतः । मेघनादो जगौ कुत्र मुच्यते भामिनी ऋषे ! ॥२३५॥
९ नारदोऽवग् तरोर्यस्मादानीतेयं नितम्बिनी । तत्रैव मोचनं युक्तमस्या एव तवानघ ! ॥२३६॥
नारदेनोदिते मेघनादस्तां गृहिणीं तदा । गत्वा तस्मिंस्तरौ सद्योऽमुञ्चद् भूषणसंयुताम् ॥२३७॥
मेघनादस्ततः स्वर्गे गत्वा पूर्वप्रियायुतः । सौख्यमनुभवन् कालं नयते सन्ततं मुदा ॥[इति एकवारपरिणयनस्वरूपम्]
१२ रुक्मिण्याः पाणितोऽकस्मात्पतितं कङ्कणं क्षितौ । तादृग्वेषयुतोत्थाय ययौ गेहे पितुश्च सा ॥२३९॥
ब्राह्मण्यवक् सुते ! कालमियन्तं कुत्र तस्थुषी । पुत्री जगौ न जानेऽहं स्थाननामादिकं मनाग् ॥२४०॥
सूर्यविमानवदीमे गेहे मां च समाददे । स्थिताऽहं क्षणवन्मातरियत्कालं सुखान्विता ॥२४१॥



द्वितीय चामरहारिणीप्रोक्त कथा ।

॥ २९८ ॥

तत्र सन्ति नरा दिव्यदेहरूपश्रियोऽनघाः । चञ्चद्वस्त्रधरा हारिहारकेयूरशालिनः ॥ २४२॥
ब्राह्मणी माह लोभेन भूषणानामिति स्फुटम् । भो पुत्रि ! त्व समायाता यदत्र तदभूद्वरम् ॥२४३॥
विलोकिता मया भूरिस्थानेषु दुःखपूर्णया । अद्य जात वरं भाग्यान्मम त्व यत्समागता ॥२४४॥
दध्यौ विममिया लक्ष्म्या मम पुत्र्याः कृते ननु । भूषणानि छलादस्या अह लास्यामि मायया ॥२४५॥
कमला माह भो पुत्रि ! भूषणानि तवानघे ! । भूपः पश्यति चेत्को वाऽन्यस्तदा स हरिष्यति ॥२४६॥
भूषणान्यङ्गजादेहादुत्तार्य द्विजगेहिनी । स्वपुत्र्यर्थ रहःस्थाने स्थापयामास दुष्टधीः ॥२४७॥
राजाऽन्यदा वहिर्ग्रामात् खेल्लयँस्तुरगान् वरान् । प्रादुर्भूत खुराघाताद् ददर्श दिव्यनूपुरम् ॥२४८॥
तदादाय ददौ पट्टराज्यै भूमीपतिस्ततः । राज्ञी प्रोवाच भो कान्त ! द्वितीयं त्व समानय ॥२४९॥
राजाऽऽहैक मिये ! लब्ध ततः पत्नी जगावदः । द्वितीयमन्यगेहिन्यै दत्त संभाव्यते मया ॥२५०॥
द्वितीयं नूपुर कान्त ! यद्यानयसि साम्प्रतम् । तदा जीवाम्यह नो चेत्मवेशोऽग्नेर्भवेन्मम ॥२५१॥ यतः–
“वज्रलेपसम मूर्खस्य नारीणा मर्कटस्य च । एको ग्रहस्तु मीनाना नीली मद्यपयोस्तथा” ॥२५२॥
गदित मन्त्रिभी राजन्नीदृशं दिव्यनूपुरम् । द्वितीय विद्यते ह्यस्या पुर्यां कस्यापि सद्मनि ॥२५३॥
प्रियाकदाग्रह मत्वा विचार्य मन्त्रिभिस्समम् । भूपालो मण्डयामास सत्रागारं महत्पुरे ॥२५४॥
कथित च नरा नार्यः स्वस्वाभरणभूषिताः। आगच्छन्ति यके भोक्तु सत्रेऽस्मिन् सकुटुम्बकाः ॥२५५॥

॥ २९९ ॥

भूरिद्रव्यप्रदानेन नृपस्तान् मानयिष्यति । तथा कृते जनाश्चारुवेषा भोक्तुमुपागमन् ॥२५६॥ [ युग्मम् ]
ब्राह्मणी स्वां सुतां लक्ष्मीं नूपुरादिविभूषिताम् । विधाय लोभतो भोक्तुमागात्सत्रालये द्रुतम् ॥२५७॥
ब्राह्मणीतनयां काणां तां दृष्ट्वा मन्त्रिणो जगुः । भूषणानीदृशान्यस्या घटन्ते न हि कर्हिचित् ॥२५८॥
ध्यात्वेति मन्त्रिभिर्यावच्छिक्षा दत्ता कशादिभिः । उक्तं च कस्य विद्यन्ते भूषणानि वदाधुना ॥२५९॥
सत्यं चेद् वक्षि नो बाले ! तदा त्वं हन्यसे भृशम् । बिभ्यती सा जगौ सन्ति भगिन्या भूषणानि मे ॥२६०॥
आकार्य रुक्मिणीं दृष्ट्वा भूपतिर्मोहितो भृशम् । सन्मान्य पितरं तस्याः परिणीन्ये सदुत्सवम् ॥२६१॥
द्वितीयं नूपुरं पूर्वगृहिणीपार्श्वतश्छलात् । समानीयार्पयामास नव्यपत्न्या महीपतिः ॥२६२॥
तस्यां सक्तो नृपोऽन्यस्या नाम लाति कदापि न । नूपुरे मार्गिते पूर्वराज्ञ्या भूपो जगावदः ॥२६३॥
विनाऽन्यनूपुरं काष्ठभक्षणं त्वं करिष्यसि । ततः किं विद्यते तत्र नूपुरेण प्रयोजनम् ॥२६४॥
ज्ञात्वा तन्नूपुरामाप्तिं पूर्वराज्ञी तदा ततः । तस्थौ त्यक्त्वा द्रुतं काष्ठभक्षणोदन्तमात्मनः ॥२६५॥
सत्त्वमसूचिते पुत्रे रुक्मिण्या जनिते सति । जन्मोत्सवं नृपश्चक्रे सन्मान्य सज्जनान् निजान् ॥२६६॥
इतोऽवग् ब्राह्मणी कान्तानीयते तनयाऽधुना । जातोऽस्ति तनयः पुत्र्याः क्रियते स्वसृवासकः ॥२६७॥
यदा न कुरुते पुत्र्या आनकं जनको गृहे । तदा च दूषणं लोका ददन्ते सततं पितुः ॥२६८॥
आनेतुं तनयां कान्तो ब्राह्मण्या प्रेषितस्ततः । गत्वा भूपान्तिके सद्यः प्रोवाचेति स्फुटाक्षरम् ॥२६९॥



द्वितीयचामरहारिणीमोक्त कथाः।

ज्ञातपुत्रा प्रिया राजन् ! प्रेषय स्वालये मम । राजा न मन्यते यावत्तावन्मर्तुं समुद्यतः ॥२७०॥
कुर्वाण मरणं विप्र दृष्ट्वा भूपेन गेहिनीम् । प्रेषितां ब्राह्मणः पुत्रीमानिनाय निजं गृहम् ॥२७१॥
अपमाता छलात्प्राह भो पुत्रि ! या सुता सुतम् । सूते स्म सा जलं कूपे जीर्णवस्त्रा प्रपश्यति ॥२७२॥
तदा पुनः सुत सूते श्रुतमेतन्मया पुरा । ततो जीर्णाम्बरां पुत्रीं कृत्वा कूपान्तिके ययौ ॥२७३॥
प्रपश्यन्तीं जलं कूपे चिक्षेप ब्राह्मणी सुताम् । प्रपतन्तीं रुक्मिणीं प्रेक्ष्याकस्माज्जग्राह तक्षकः ॥२७४॥
गत्वा स्वस्थानके पत्नी कृत्वा ता रुक्मिणीं क्षणात् । चिक्रीड तक्षकः कूपतटाकोपवनादिषु ॥२७५॥
इति द्वितीय (तृतीय)नारपरिणयनसम्बन्धः ।
इतश्च क्रूरया विप्रपत्न्या पुत्री निजा तदा । रुक्मिण्या भूषणैर्वस्त्रैर्भूषिता विहिता रहः ॥२७६॥
धात्र्येका तनय स्तन्यं कारयितुं कृता पुनः । यतो राज्ञां सुतं स्तन्यं कारयन्ति स्म न प्रियाः ॥२७७॥
प्रेषिता सदने पत्युर्ब्राह्मण्या तनया ततः । तादृक्षां वीक्ष्य भूपालो दध्यौ जातमिदं किमु ॥२७८॥
पृष्टा च भूभुजा प्राह स्वामिन् ! विषमस्थानके । पतिताऽहमभूत् तेन नयने फुल्लकं मम ॥२७९॥
राजा दध्यावियं मायाविनी मम प्रिया न हि । केन त्वं प्रेषितेत्युक्ते भूभुजा वक्ति नो कनी ॥२८०॥
ततः सा कुट्टिताऽत्यन्त कशाघातैर्महीभुजा । प्राह मातुः कृतं सर्वं भूपतेः पुरतस्तदा ॥२८१॥
ततो भूपो जगौ कूपे तस्मिन्नेव पताम्यहम् । प्रोचुर्मन्त्रीश्वरा मासान् षट् प्रतीक्षस्व भूपते ! ॥२८२॥

॥ ३०१ ॥

ततो विप्रप्रिया देशात्कर्षिता भूभुजा तदा । राजा जन्मोत्सवं सूनोः कारयामास तत्क्षणात् ॥२८३॥
सूनोर्जन्मोत्सवं श्रुत्वा तक्षकस्य मुखात्तदा । प्रोवाच रुक्मिणी कान्त ! द्रष्टुमीहेऽहमङ्गजम् ॥२८४॥
सा च तक्षकसान्निध्याद्रात्रावेव नृपालये । कारयित्वा सुतं स्तन्यं भूषणान्यमुचद्रहः ॥२८५॥
प्रातर्भूपः सुतोपान्ते ज्ञात्वा पत्न्याः समागमम् । सावधानः प्रियां धर्तुं तिष्ठति स्म रहो निशि ॥२८६॥
कारयित्वा सुतं स्तन्यपानं यान्तीं प्रियां नृपः । दृष्ट्वा धर्तुं न शक्नोति गच्छन्तीं लघुलाघवात् ॥२८७॥
नृपोऽन्यदा स्थितः सावधानीभूय विशेषतः । कारयन्तीं सुतं स्तन्यपानं पत्नीं स्म पश्यति ॥२८८॥
उपलक्ष्य प्रियां सम्यग् चलन्तीमञ्चले नृपः । धृत्वा तस्थौ च शय्यायां यावन्मुदितमानसः ॥२८९॥
अवधिज्ञानतो ज्ञात्वा स्वपत्नीगमनं स्फुटम् । तक्षकः स्वप्रियां नेतुमागात्तावन्नृपालये ॥२९०॥
रोषेण नृपतिं पृष्ठौ दृष्ट्वा निर्याति यावता । तावताऽऽस्फालितो भित्तौ भूभुजा तक्षको मृतः ॥२९१॥
विषव्याप्ततनुर्भूपः क्षणेन मरणं गतः । मृतौ द्वौ रमणौ दृष्ट्वा रुक्मिणी दुःखिताऽभवत् ॥२९२॥
प्रातः पती समादाय रुक्मिणी काष्ठभक्षणम् । कर्तुं यदाऽगयौ प्रेतगृहे दुःखेन पूरिता ॥२९३॥
मेघनादो दिवोऽकस्मात्तावत्तत्रागतो जगौ । पत्यौ जीवति भो पत्नि ! पावके किं प्रवेक्ष्यसि ॥२९४॥
तया पृष्टो जगौ मेघनादः सम्बन्धमात्मनः । रुक्मिण्यवग् यदि त्वं मे रमणौ जीवयिष्यसि ॥२९५॥
तदाऽहं जीवयिष्यामि मरिष्याम्यन्यथा पुनः । क्षिप्त्वाऽमृतच्छटां मेघनादस्तावुदजीवयत् ॥२९६॥

मभेय गृहिणीत्येव जल्पन्तस्ते त्रयो नराः । विवादं कुर्वते स्म प्राग् मरणान्तं परस्परम् ॥२९७॥
कस्येषा मध्यतः कन्या पुरुषस्याभवत्तदा । सभासद्याः प्रजल्पन्तु विचार्य निजबुद्धिना ॥२९८॥
यदा कोऽपि न जानाति कस्य कन्याऽभवत् स्फुटम् । तदा भूपो जगौ पत्नी मनुष्यत्वाच्च भूपतेः ॥२९९॥
कथामेना तदा श्रुत्वा तस्मै पण्डितमौलये । दशकोटीर्ददौ हेम्नो विक्रमार्कमहीपतिः ॥३००॥
अन्योऽपि यो नरो वार्ता महाश्चर्यविधायिनीम् । जगौ श्रीविक्रमार्कस्य पुरतः कोविदोऽनघाम् ॥३०१॥
श्रीविक्रमार्कमहीपालः सद्यः कौतुकिताशयः । एका कोटिं ददौ हेम्नः पण्डिताय न संशयः ॥३०२॥
एवं श्रीविक्रमार्कस्यौदार्यं चामरहारिणी । प्रोक्त्वा प्राह कथं तस्य तुल्योऽसि विक्रमाङ्गज ! ॥३०३॥
बुद्ध्यौदार्ये भवेता ते ईदृशे विक्रमाङ्गज ! । न दृश्यतेऽधुना कस्य तेनैवं जहसे मया ॥३०४॥
श्रीविक्रमचरित्रस्य पुरश्चामरहारिणी । द्वितीया विक्रमार्कस्य वृत्तमेव जगौ तदा ॥३०५॥
तृतीयाऽवग् नृपादिष्टा तत्र चामरहारिणी । श्रीविक्रचरित्रस्य पुरो गीर्वाणभाषया ॥३०६॥
अनेकमन्त्रि सामन्तपूर्णायामन्यदा सभे । सभाया विक्रमादित्यमहीपातिरुपाविशत्॥३०७॥
वैतालिकस्तदा कोऽपि प्रतीहारनिवेदितः । ब्रह्मायुर्भवताद्देवेत्युच्चरन्नागतो जगौ ॥३०८॥
राजन् ! किञ्चित्कलाश्चर्यं दर्शयिष्याम्यहं तव । भवान् यदि स्वय सावधानीभूयेह पश्यति ॥३०९॥
भूपोऽवग् दर्शय त्वं भो कलाशालिन् ! निजाः कलाः । ततः स्मेरमुखाः सर्वे पश्यन्ति परिषज्जनाः ॥३१०॥

॥ ३०३ ॥

ततो वैतालिकोऽदृश्यीभूतरूपः क्वचिद्ययौ । यावच्चमत्कृता लोका दधुः [illegible] मानसे ॥३११॥
तावत्कोऽपि पुमान् हस्ते वामे नारीं वरां दधद् । दक्षिणे करवालं च सभायां समुपाययौ ॥३१२॥
प्रणम्यावग् नृपं स्वामिन् ! असारेऽस्मिन् भवे स्फुटम् । सारद्वयमहं मन्ये कमला-वनिते शुभे ॥३१३॥ यतः—
"आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगिताम् , मूकत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् ।
पात्रापात्रविचारभावविरहो यच्छत्युदारात्मताम् , मातर्लक्ष्मि ! तव प्रसादवशतो दोषा अपि स्युर्गुणाः ॥३१४॥
सा सद्धर्मरता विवेककलिता शान्ता सती सार्जवा, सोत्साहा प्रियभाषिणी सुनिपुणा सल्लक्षणा सद्गुणा ।
सद्वृत्ता गृहनीतिविस्मितमुखी दानोन्मुखी सन्मतिः , सन्तुष्टा विनयान्विताऽतिसुभगा श्रीरेव सा स्त्रीर्ननु ॥३१५॥
केऽपि सरस्वतीं सारां मन्यन्ते विबुधा जनाः । प्रतिभाति परं सा मे मानसे नो मनागपि ॥३१६॥ यतः—
"सोहइ सुहावेइ उवभुंजंतो लवोवि लच्छीए । एसा सरस्सई पुण असमग्गा किं न निवडेइ" ॥३१७॥
अतः सत्पुरुषैरन्यवनिताविषये सदा । दातव्ये न दृशौ रागाञ्चिते स्वहितमिच्छुभिः ॥३१८॥ यतः—
परनारीपरद्रव्यापहारे मानसं निजम् । कर्तव्यं न मनाग् स्वस्य हितैषिभिर्विचक्षणैः ॥३१९॥
परोपकारः कर्तव्यः प्राणैः कण्ठगतैरपि । परोपकृतितोऽमुत्र परत्र च सुखी भवेत् ॥३२०॥ यतः—
"विरला जाणंति गुणा विरला पालंति निद्धणे नेहा । विरल च्चिअ निअदोसे पिच्छंति सभावगुणकलिआ ॥३२१॥
हुंति परकज्जनिरया निअकज्जपरम्मुहा फुडं सुअणा । चंदो धवलेइ महीं न कलंकं अत्तणो फुसइ" ॥३२२॥

तृतीयचामरहारिणी-कथा।



॥ ३०४ ॥

देवदानवयोरद्य स्वर्गे युद्ध भविष्यति । अहमिन्द्रस्य भृत्योऽस्मि तत्र यास्यामि तेन च ॥३२३॥
इय मम प्रिया स्वर्गे गतस्य समराङ्गणे । सङ्ग्राम कुर्वतो विघ्नकारिणी भवति द्रुतम् ॥३२४॥
३ अन्यस्य सनिधौ पुंसो मुच्यते चेदियं यदि । ततो मम मनो नैव मन्यते विघ्नहेतुतः ॥३२५॥
मुक्त्वेमा गृहिणीं भूप ! तवोपान्तेऽधुना द्रुतम् । गच्छन्नस्मि द्युलोकेऽह युद्धार्थमिन्द्रसन्निधौ ॥३२६॥
यावत्कार्यं सुरेन्द्रस्य कर्त्तेष्याम्यहकं द्रुतम् । तावत्त्वया नृप ! स्वान्तःपुरे रक्ष्या सुयत्नतः ॥३२७॥
६ उक्त्वा वैतालिको ह्येव सभ्याना पश्यता तदा । खड्गमादाय शक्रस्य कार्यं कर्तुं ययौ दिवि ॥३२८॥
क्षणाद् व्योम्नि रणध्वान रौद्रं श्रुत्वा सभाजनाः । प्रोचुर्मिथोऽधुना देव–दैत्ययोर्जायते रणः ॥३२९॥
तदा वैतालिकस्याशु करावंह्री शिरो वपुः । क्रमात्पेतुर्नृपास्थायां वीक्ष्य सभ्याश्चमत्कृताः ॥३३०॥
९ पत्नी पत्युः शरीरस्यावयवान् पतितान् तदा । सभाया निखिलान् वीक्ष्य प्रोवाचेति नृप प्रति ॥३३१॥
राजन् ! त्वमसि मे भ्राता हतः स्वर्गे पतिर्मम । तथा कुरु यथा वह्नौ पत्या सह विशाम्यहम् ॥३३२॥
निवारिताऽपि भूपेन सा भृशं हेतुयुक्तिभिः । साश्चर्यमथ लोकेषु पश्यत्सु प्रकटं तदा ॥३३३॥
१२ लात्वा पत्युः शरीरस्यावयवान् निखिलानपि । वैतालिकप्रिया वह्नौ प्रविवेश कृतत्वरा ॥३३४॥ [ युग्मम् ]
तच्छोकसङ्कुलो राजा यावत्तिष्ठति ससदि । तावद्वैतालिको व्योम्न एत्य प्राह नृपं प्रति ॥३३५॥
राजन् ! तव प्रसादेन मया स्वर्गे जितं क्षणात् । हारितं दानवैर्देवैर्जितं युद्धाङ्गणे क्षणात् ॥३३६॥

॥ ३०५ ॥

ततोऽहं मानितः स्वर्गिनाथेन प्रेषितः पुनः । मोदं प्रकुरु मे पत्नीप्रदानेन महीपते ! ॥३३७॥
राजा स्मय–विषादाभ्यां विवशो दीनमानसः । तद्भार्योऽग्निप्रवेशादिवृत्तान्तं निखिलं जगौ ॥३३८॥
प्राह वैतालिको राजन् ! कूटं किं जल्प्यते त्वया । मम प्राणप्रिया भार्याऽन्तःपुरेऽस्ति तवाधुना ॥३३९॥
भूपामात्ययुतो राज्ञोऽन्तःपुरात्तां नितम्बिनीम् । वैतालिकः समानीय जगादेति नृपं प्रति ॥३४०॥
राजन् ! पुरा मयाऽन्यस्त्रीपराङ्मुखः श्रुतो भुवि । अधुनैवंविधं कृत्यं त्वयाऽकार्यल्पकृते कथम् ॥३४१॥
भूपालोऽधोमुखो भूत्वा यावद्दैन्यं स्थितस्तदा । तावद्वैतालिकेनाशु संहृता सा नितम्बिनी ॥३३२॥
सोऽवग् मा कुरु भूपाल ! विषादं मानसेऽधुना । मयेदं निखिलं चक्रे इन्द्रजालं पुरस्तव ॥३४३॥
ततस्तुष्टेन भूपेन पाण्ड्यदेशागतं तदा । प्राभृतं दापितं तस्मै इदं वैतालिकाय वै ॥३४४॥
अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुलाः, पञ्चाशन्मधुगन्धलुब्धमधुपक्रोधोद्धुराः सिन्धुराः ।
लावण्योपचयप्रपञ्चितदृशां वाराङ्गनानां शतम्, दण्डे पाण्ड्यनृपेन ढौकितमिदं वैतालिकस्यार्पितम् ॥३४५॥
प्रोक्त्वैवं विक्रमार्कस्य वृत्तं चामरहारिणी । तृतीयाऽवक् कथं तस्य तुल्यस्त्वं च भविष्यसि ॥३४६॥
चतुर्थाऽवग् नृपादिष्टा तत्र चामरहारिणी । सभायां विक्रमार्कोर्वीपालोऽन्येद्युरुपाविशत् ॥३४७॥
राज्यं कुर्वन् नृपोऽन्येद्युर्विदेशादागतं द्विजम् । पप्रच्छ किं त्वया दृष्टं कौतुकं वसुधातले ! ॥३४८॥
द्विजोऽवक् श्रीगिरावासीदेको योगी हराभिधः । परकायप्रवेशाहविद्यावान् विशदाशयः ॥३४९॥

तस्य सेवा मयाऽकारि षण्मासावधि भक्तितः । विद्या दत्ता न मे तेन योगिना तत्र पर्वते ॥३५०॥
तत्रेत्य योगिनः पार्श्वाद् विद्या दापय मे त्वकम् । उपकारपरोऽशेषलोकाना त्वं श्रुतो मया ॥३५१॥
कृपया विक्रमादित्यो गत्वा श्रीपर्वते रयात् । ननाम योगिन सद्यो भक्त्या विप्रसमन्वितः ॥३५२॥
विनयेन महीशेन प्रीणितो योगिराट् जगौ । परकायप्रवेशाह्वां विद्या लाहि नरोत्तम ! ॥३५३॥
राजा माहास्य विप्रस्य देहि विद्या त्वमुत्तमः । भवतश्चरणाम्भोजप्रसादात्सर्वमस्ति मे ॥३५४॥
योगी प्राहास्त्वयोग्योऽय कृतघ्नः स्वामिवञ्चकः । अनर्थो जायते विद्यादापनादस्य ते नृप ! ॥३५५॥ यतः–
"यथा गजपतिः श्रान्तः छायार्थी वृक्षमाश्रितः । विश्रम्य तं गजो हन्ति तथा नीचः स्वमाश्रयम्" ॥३५६॥
ततो राजोपरोधेन विप्राय योगिराट् तदा । परकायप्रवेशाह्वा ददौ विद्या नृपाय च ॥३५७॥
विद्या भूप–द्विजौ लात्वा नत्वा योगिपदाम्बुजम् । अवन्त्या बहिरुद्याने देशे यावत् समीयतुः ॥३५८॥
इतो दृष्ट्वा मृत पट्टगज मन्त्रीश्वरादयः । कारयन्ति तदा गर्ता गजक्षेपणहेतवे ॥३५९॥
ज्ञात्वैतद्विक्रमादित्यः प्रोवाचेति द्विज प्रति । रक्षणीयं त्वया मेऽङ्गं जीवयिष्याम्यह गजम् ॥३६०॥
द्विजायच वपुः कृत्वा गत्वा पुर्यां नरेश्वरः । प्रविश्य मृतनागाङ्गे जीवयामास कुञ्जरम् ॥३६१॥
मङ्गलानि पुरीमध्ये स्थाने स्थाने व्यधुर्जनाः । इतो द्विजो निज देहं मुक्त्वा भूपतनुं ललौ ॥३६२॥
विक्रमार्कवपूरूपो विप्रो मध्येपुर ततः । अभ्येत्य मिलितोऽशेषान्तःपुराणा च मन्त्रिणाम् ॥३६३॥

॥ ३०७ ॥

अलसं सस्वरहितमन्यादृग्जल्पनापरम् । भूपं निरीक्ष्य मन्त्रीशा दध्युरेवं परस्परम् ॥३६४॥
अयं न घटते भूपो विक्रमार्कः कदाचन । एवं च पट्टराज्यादिजना दध्युः स्फुटं हृदि ॥३६५॥
गत्वा पुर्या वहिर्यावद्राजा स्वाङ्गं निरीक्षते । तावद्भिमतनुं पक्षिभक्षितं वीक्ष्य व्यातवान् ॥३६६॥
नूनं विप्रः कृतघ्नः सोऽधिष्ठायाशु तनुं मम । लली राज्यं मदीयं च क्रियते साम्प्रतं किमु ॥३६७॥ यतः—
"कोऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः, स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवम्, को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्" ॥
भ्राम्यन्वने मृतं कीरं दृष्ट्वा भूपगजस्तदा । प्रविवेश शुकस्याङ्गे सद्यो मुदितमानसः ॥३६९॥
आगत्य कस्यचिद्धस्ते पुंसः कीरो जगौ वने । गच्छ त्वं मां समादायोज्जयिन्यां पुरि वेगतः ॥३७०॥
तत्र भूपगृहोपान्ते स्थित्वा त्वं क्रयहेतवे । देहि मां कमलादेव्या लप्स्ये दीनारपट्शतम् ॥३७१॥
लात्वा शुकं नरः सोऽपि देव्यै दीनारपट्शतैः । अर्पयामास पश्यन्ती तं राज्ञी प्रमुदेतराम् ॥३७२॥
पप्रच्छ कमलादेवी शुकं यद्यत्तदा स्फुटम् । प्रश्नोत्तरादिकं तत्तत्कीरो जल्पति नित्यशः ॥३७३॥
कीरो दध्यावहं ज्ञापयिष्ये देव्यै यदि स्वकम् । तदाऽविचार्य राज्येषा मारयिष्यति भूपतिम् ॥३७४॥
यद्यनेन महीशेन ज्ञातोऽहं कीरदेहगः । तदाऽसौ मां प्रपञ्चेन मारयिष्यति दुष्टधीः ॥३७५॥
सौभाग्यवान् शुको देव्या पोष्यते भोजनादिभिः । शुकं विना क्षणं नास्या रतिर्भवति काचित् ॥३७६॥


॥ ३०८ ॥